# शब्दशास्त्रीयवृत्तिविमर्शः



कुलपतेः डॉ. मण्डनमिश्रस्य प्रस्तावनया समलङ्कृतः

प्रणेता

आचार्यश्रीरामप्रसादत्रिपाठी



सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः

वाराणसी

ĀCĀRYABADARĪNĀTHAŚUKLASMṚTI - GRANTHAMĀLĀ

[Vol. 5]

# ŚABDAŚĀSTRĪYAVṚTTIVIMARŚA

***FOREWORD BY***

**DR. MANDAN MISHRA**

**VICE - CHANCELLOR**

***Written & Edited by***

**ĀCĀRYAŚRĪ RĀMAPRASĀDA TRIPĀTHĪ**

Ex - Professor & Head of Department

Vyākaraṇa - Yoga - Tantra & Āgama

Sampurnanand Sanskrit University

Varanasi




**VARAṆASI**

**1997**

*Research Publication Supervisor* —
**Director, Research Institute,**
Sampurnanand Sanskrit University
Varanasi.



*Published by* —
**Harish Chandra Mani Tripathi**
Publication Officer,
Sampurnanand Sanskrit University
Varanasi - 221 002



*Available at* —
**Sales Department,**
Sampurnanand Sanskrit University
Varanasi - 221 002



**First Edition,** 500 Copies
**Price** : Rs. 75.00



*Printed by* —
**Tara Printing Works**
Kamachha, Varanasi - 221 010

आचार्यबदरीनाथशुक्लस्मृति - ग्रन्थमाला

[पञ्चमं पुष्पम्]

# शब्दशास्त्रीयवृत्तिविमर्शः

कुलपतेः डॉ. मण्डनमिश्रस्य प्रस्तावनया समलङ्कृतः

*प्रणेता सम्पादकश्च*

**आचार्यश्रीरामप्रसादत्रिपाठी**

व्याकरण-योग-तन्त्रागमविभागाध्यक्षचरः

वेदवेदाङ्गसङ्कायाध्यक्षचरश्च

संम्पूर्णानन्द-संस्कृत-विश्वविद्यालयस्य

वाराणसी




**वाराणस्याम्**

२०५४ तमे वैक्रमाब्दे १९१९ तमे शकाब्दे १९९७ तमे खैस्ताब्दे

अनुसन्धानप्रकाशनपर्यवेक्षकः —
**निदेशकः, अनुसन्धानसंस्थानस्य**
सम्पूर्णानन्द-संस्कृत-विश्वविद्यालये
वाराणसी।



प्रकाशकः —
**डॉ. हरिश्चन्द्रमणित्रिपाठी**
प्रकाशनाधिकारी,
सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयस्य
वाराणसी-२२१ ००२



प्राप्तिस्थानम् —
**विक्रय-विभागः**
सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयस्य
वाराणसी - २२१ ००२



**प्रथमं संस्करणम्,** ५०० प्रतिरूपाणि
**मूल्यम्** — ७५.०० रूप्यकाणि



मुद्रकः —
**तारा प्रिंटिंग वर्क्स**
कमच्छा, वाराणसी - २२१ ०१०

# प्रस्तावना

शाब्दबोधानुकूलपदार्थज्ञानजनकज्ञानविषयः पदपदार्थसम्बन्धविशेषरूपा वृत्तिः। सा च त्रिविधा— शक्तिर्लक्षणा व्यञ्जना चेति। तत्र तादात्म्यलक्षणः सम्बन्धः शक्तिरिति महामुनिपाणिनिमतम्। योग्यता (बोधजनकता) सा इति श्रीभर्तृहरिः। वाच्यवाचकभावरूपा सा इति श्रीनागेशः। एकस्मिन्नर्थेऽने-कार्थनिरूपितं तादात्म्यमेकमनेकं वेत्यत्र भाष्योक्तं पक्षत्रयम्। अपशब्देऽपि शक्तिः स्वीक्रियते। योगः, रूढिः, योगरूढिश्चेति त्रिविधेयं शक्तिः। संयोग-विप्रयोगादिभिरस्या नियमनं सोदाहरणं दर्शितम्। न्यायवैशेषिक-मीमांसादिदर्शनैः सहास्याः स्वरूपविचारे संवादो विसंवादश्च। यदीयपुण्यस्मृतौ निबन्धोऽयं निबद्धस्तत्सम्मतमपि शक्तिस्वरूपमन्ते द्रष्टव्यम्।

शक्यतावच्छेदकारोपरूपा लक्षणा। सा त्वप्रसिद्धा शक्तिरेव, न स्वतन्त्रा वृत्तिरिति। 'गङ्गायां घोषः' इत्यत्र तीरे गङ्गात्वारोपः। 'काकेभ्यो दधि रक्ष्यताम्' इत्यत्र काकाकाकसमुदाये काकत्वारोपः। 'कमलानि कमलानि' इत्यत्र सौरभातिशयविशिष्टे कमले कमलत्वारोपः। 'कचतस्त्रस्यति वदनम्' इत्यत्र कचत्वारोपो राहौ। तात्पर्यानुपपत्तिरेवास्या बीजम्। बहवो भेदा अस्या वर्णिताः सन्ति।

स्फोटरूपशब्दस्य व्यङ्ग्यता, प्रादिनिपातानां क्रियाविशेषव्यञ्जकता कथं सिद्ध्येत्। व्यञ्जनावृत्तिमन्तरा इति कृत्वा पदपदार्थयोर्वाक्यवाक्यार्थयोः, व्यङ्ग्य-व्यञ्जकभावसम्बन्धो व्यञ्जना अवश्यं समाद्रियते। संस्कारविशेषस्तु उद्बुद्धः सन् तद्द्योतकः। इयं ज्ञाता सती स्वरूपसती वा शाब्दबोधहेतुः। अस्याः कियन्तो भेदप्रभेदा वा? अस्या अस्वीकारे मतान्तरयुक्तयस्तासां निरासश्चेत्यादि विशदं विवेचितमस्ति।

स्वनामधन्या आचार्यश्रीबदरीनाथशुक्लमहोदया वाराणस्या वैदुष्य-परम्परायाः साक्षात् प्रतिमूर्त्तय आसन्। एकत्र गभीरं पाण्डित्यम्, अपरत्र

अनुसन्धानप्रकाशनपर्यवेक्षकः —
**निदेशकः, अनुसन्धानसंस्थानस्य**
सम्पूर्णानन्द-संस्कृत-विश्वविद्यालये
वाराणसी।



प्रकाशकः —
**डॉ. हरिश्चन्द्रमणित्रिपाठी**
प्रकाशनाधिकारी,
सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयस्य
वाराणसी-२२१ ००२



प्राप्तिस्थानम् —
**विक्रय-विभागः**
सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयस्य
वाराणसी - २२१ ००२



**प्रथमं संस्करणम्, ५०० प्रतिरूपाणि**
**मूल्यम् — ७५.०० रूप्यकाणि**



मुद्रकः —
**तारा प्रिंटिंग वर्क्स**
कमच्छा, वाराणसी - २२१ ०१०

# प्रस्तावना

शाब्दबोधानुकूलपदार्थज्ञानजनकज्ञानविषयः पदपदार्थसम्बन्धविशेषरूपा वृत्तिः। सा च त्रिविधा— शक्तिर्लक्षणा व्यञ्जना चेति। तत्र तादात्म्यलक्षणः सम्बन्धः शक्तिरिति महामुनिपाणिनिमतम्। योग्यता (बोधजनकता) सा इति श्रीभर्तृहरिः। वाच्यवाचकभावरूपा सा इति श्रीनागेशः। एकस्मिन्नर्थेऽनेकार्थनिरूपितं तादात्म्यमेकमनेकं वेत्यत्र भाष्योक्तं पक्षत्रयम्। अपशब्देऽपि शक्तिः स्वीक्रियते। योगः, रूढिः, योगरूढिश्चेति त्रिविधेयं शक्तिः। संयोगविप्रयोगादिभिरस्या नियमनं सोदाहरणं दर्शितम्। न्यायवैशेषिक-मीमांसादिदर्शनैः सहास्याः स्वरूपविचारे संवादो विसंवादश्च। यदीयपुण्यस्मृतौ निबन्धोऽयं निबद्धस्तत्सम्मतमपि शक्तिस्वरूपमन्ते द्रष्टव्यम्।

शक्यतावच्छेदकारोपरूपा लक्षणा। सा त्वप्रसिद्धा शक्तिरेव, न स्वतन्त्रा वृत्तिरिति। 'गङ्गायां घोषः' इत्यत्र तीरे गङ्गात्वारोपः। 'काकेभ्यो दधि रक्ष्यताम्' इत्यत्र काकाकाकसमुदाये काकत्वारोपः। 'कमलानि कमलानि' इत्यत्र सौरभातिशयविशिष्टे कमले कमलत्वारोपः। 'कचतस्त्रस्यति वदनम्' इत्यत्र कचत्वारोपो राहौ। तात्पर्यानुपपत्तिरेवास्या बीजम्। बहवो भेदा अस्या वर्णिताः सन्ति।

स्फोटरूपशब्दस्य व्यङ्ग्यता, प्रादिनिपातानां क्रियाविशेषव्यञ्जकता कथं सिद्ध्येत्। व्यञ्जनावृत्तिमन्तरा इति कृत्वा पदपदार्थयोर्वाक्यवाक्यार्थयोः, व्यङ्ग्य-व्यञ्जकभावसम्बन्धो व्यञ्जना अवश्यं समाद्रियते। संस्कारविशेषस्तु उद्बुद्धः सन् तद्द्योतकः। इयं ज्ञाता सती स्वरूपसती वा शाब्दबोधहेतुः। अस्याः कियन्तो भेदप्रभेदा वा? अस्या अस्वीकारे मतान्तरयुक्तयस्तासां निरासश्चेत्यादि विशदं विवेचितमस्ति।

स्वनामधन्या आचार्यश्रीबदरीनाथशुक्लमहोदया वाराणस्या वैदुष्यपरम्परायाः साक्षात् प्रतिमूर्त्तय आसन्। एकत्र गभीरं पाण्डित्यम्, अपरत्र

व्याख्यानवाचस्पतित्वम्, तथैव च प्रशासनकुशलताया दृढतरा त्रिवेणी तेषु प्रत्यक्षा आसीत्। ते ह्यासन् न्यायशास्त्रकेसरिणः। तेषां महती शिष्यपरम्पराऽद्यापि समस्तं जगत् स्वकीयेन तत्त्वचिन्तनेन समलङ्करोति। अस्य राष्ट्रस्य विभिन्नसम्प्रदायानाम् आचार्या अपि तेषां शिष्यत्वं समवाप्य परमं गौरवान्विता अभवन्। तेषां वैदुष्यं सर्वैः सर्वथा समादृतम्, विभिन्नासु च शास्त्रार्थसदस्सु तैः स्वकीयं केसरित्वं विश्वस्य विभिन्नेषु कोणेषु सुप्रतिष्ठापितम्, अस्य च विश्वविद्यालयस्य कुलपतित्वेन स्वकीया सन्निर्णयशक्तिः प्रशासनक्षमता च साक्षात् प्रदर्शिता। तेषामवदानानि स्वर्णाक्षरैरुल्लेखनीयानि वाराणस्याः संस्कृतजगतश्च क्षेत्रे। तेषां सहृदयता, शिष्यजनवत्सलता, अनुगतजनपालनीयता च सुप्रसिद्धा वर्तते, अत एव तेऽद्यापि राष्ट्रस्य विभिन्नेषु प्रदेशेषु स्वकीयेन ज्ञानगौरवेण विद्यावदानेन च श्रद्धया स्मर्यन्ते। विश्वविद्यालयेनानेनाप्यात्मानं कृतार्थीकर्तुं तेषां स्मृतौ परमवन्दनीयानाम् आचार्यचरणानां **स्वामिश्रीगुरुशरणानन्दम**होदयानां सहायतया मनीषिप्रवराणां **श्रीविद्यानिवासमिश्र**महोदयानां कार्यकाले व्याख्यानमाला प्रारब्धा।

मत्कृतेऽयमस्ति सौभाग्यस्य विषयो यदहं तेषां कृपापात्रेषु प्रथमगणनीयतां प्राप्तवान्, तेषां च छत्रछायायां विविधान् विकासान् समुन्नतीश्चाधिगतवान्। अयमस्ति हर्षस्य विषयो यद् मम कुलपतिपदस्य कार्यकालसमारम्भ एव मया महाबोधिसोसायटीद्वारा जापानदेशीयोद्योगपतीनां साहाय्येन प्राप्तेन धनेनास्या व्याख्यानमालायाः स्थायित्वाय एकलक्षरूप्यकपरिमितराशिः संरक्षिता, तेन च प्रतिवर्षमियं प्रवर्तमाना व्याख्यानमाला गौरवं वर्द्धयति। एतादृशस्य महनीयस्य विद्वद्वरेण्यस्य स्मृतौ परमश्रद्धेयैः **आचार्यश्रीरामप्रसादत्रिपाठि**महोदयैः १९९६ वर्षे **"शब्दशास्त्रीयवृत्तिविमर्शः"** इति विषयमधिकृत्य विशेषतः स्वकीयश्रद्धाञ्जलित्वेन व्याख्यानद्वयं प्रदत्तम्। अयमस्ति गौरवस्य प्रसङ्गो यद् यादृशानां विदुषां स्मृतौ व्याख्यानमालेयं संयोजिता, तादृशा एव विद्यातपःपूता व्याख्यातारः आचार्यश्रीत्रिपाठिमहोदया विश्वविद्यालयस्य निवेदनं स्वीकृत्य व्याख्यानद्वयं प्रस्तुतवन्तः। तदिदं सम्मानपुष्पं श्रद्धेयानां श्रीशुक्लमहोदयानां स्मृतौ समर्पयन् अहमात्मानं कृतकृत्यं मन्ये।

अस्या व्याख्यानमालाया: संयोजने तेषामेव शिष्यैर्न्यायशास्त्र-विभागाध्यक्षैर्विद्वद्वरेण्यैः **श्रीवशिष्ठत्रिपाठिमहोदयैः** सुमहत्साहाय्यं कृतम्, अतस्तेभ्यः, प्रकाशनाधिकारिणे **डॉ. हरिश्चन्द्रमणित्रिपाठिने**, तारायन्त्रालय-सञ्चालकाय **श्रीरविप्रकाशपण्ड्यामहोदयाय** च धन्यवादान् वितरन् ग्रन्थमिमं पाठकेभ्यः समुपहरामि।

वाराणस्याम्
मार्गशीर्षपूर्णिमायाम्,
वि. सं. २०५४

(मण्डनमिश्रः)
*कुलपतिः*
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य

# प्रास्ताविकम्

विद्वद्भिर्मानसन्तुष्टैर्नित्यं संवर्ध्यमानया ।
विद्यया रक्षितं राष्ट्रं प्रसीदति न सीदति ।।

निश्चप्रचमेतद् यद् विद्याया रक्षणेनैव पृथिवीयं सुरक्षिता भवति। तस्या रक्षणं च विदुषां रक्षणात्। विदुषां रक्षणं च विद्वत्सम्माननादेव।

अद्यत्वे खलु प्रचलत्सु विदुषां विद्यानुरागिणां च सम्माननसाधनेषु तेभ्योऽभिनन्दनग्रन्थसमर्पणं तदीयस्मृतौ व्याख्यानमालोपहरणं वा महनीयं साधनं मन्यते। अस्मिन् साधनसमवाये विद्वांसो बहुमूल्यैर्लेखैः, विद्वत्प्रणयिनो व्यापकैः स्तवनैरभिनन्दनग्रन्थं सम्पाद्य, व्याख्यानमालां च संयोज्य अभिनन्दनीयं सम्माननीयं च पुरुषं सत्कुर्वन्ति। अनेनादरविधिना सत्क्रियमाणस्य व्यक्तिविशेषस्य सम्माननेन सह विद्याक्षेत्रे विशिष्टो ज्ञानराशिः प्रेरणाप्रवाहश्च उपसृतो भवति।

उपस्थाप्यमाना चैषा व्याख्यानमाला येषां महनीयचरितानां सम्माने प्रक्रम्यते, ते सन्ति सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य कुलपतिचराः, न्यायशास्त्रे गौतमकल्पगुरुवर**श्रीबालकृष्णमिश्र**चरणोपासकाः, दार्शनिक-सार्वभौमाः, गुरूणां गुरवः **श्रीबदरीनाथशुक्लमहोदयाः**।

श्रीशुक्लमहोदया बस्तीमण्डले जनिं लब्ध्वा विशिष्टवैदुष्यकामनया सर्वविद्याराजधानीं भगवतः शिवस्य नगरीं वाराणसीमागत्य काशीहिन्दू-विश्वविद्यालये संस्कृतमहाविद्यालये न्यायविभागे प्रवेशं प्राप्य, न्यायदर्शने प्रख्यातवैदुषीकविद्वद्वरश्रीरामशङ्करभट्टाचार्यचरणानाम्, प्राधान्येन न्याय-शास्त्रावतारविद्वदग्रेसरश्रीबालकृष्णमिश्रपादपद्मानां चानितरसाधारणो-पासनयाऽचिरेणैव न्यायशास्त्रे महतीं प्रतिभामवाप्नुवन्।

आचार्यद्वितीयवर्षेऽध्ययनं कुर्वन्त एव श्रीशुक्लवर्य्या जगन्मातुर्भगवत्याः श्रीदुर्गादेव्याः प्राङ्गणे दुर्गाकुण्डे प्रचलन्त्यां वार्षिक्यां शास्त्रार्थचर्चायां भागं गृहीत्वा शास्त्रार्थमहारथिना विद्वन्मूर्धन्येन श्रीहाराणचन्द्रभट्टाचार्येण साकमेकया होरया शास्त्रार्थं समपादयन्।

एतद् वृत्तं श्रुत्वा हिन्दूविश्वविद्यालयस्य जन्मदातारः कुलपति-पदमलङ्कुर्वन्तः प्रातःस्मरणीयाः श्रीमन्तो मालवीयमहोदयाः प्रहृष्टमनसा एनान् शुक्लमहानुभावान् न्यायविभागे प्राध्यापकपदे नियोजयामासुः। इदमेतदीयप्रतिभाया महद् वैशिष्ट्यममन्यत समस्तैर्वाराणसेयविद्वद्भिः, यदल्पीयस्येव वयसि तत्रापि अध्ययनकाल एवेदृशे विश्वविश्रुते विश्वविद्यालयेऽध्यापकपदाधिष्ठानम्। कतिपयवर्षैस्तत्र सफलमध्यापनं विधाय गवर्नमेण्टसंस्कृतकालेजाभिधे काशिकराजकीयसंस्कृतमहाविद्यालये ससम्मानं प्रधानाचार्यपदे इमे प्रतिष्ठापिता बभूवुः। पुनश्चास्याः संस्थायाः 'वाराणसेय-संस्कृतविश्वविद्यालयरूपे परिवर्तिताया न्यायविभागे प्राचार्यपदमध्यगच्छन्। सेवामुक्त्यनन्तरं कुलपतिपदमपि अवहितमनसा सम्भालयन्तो न केवलं विश्वविद्यालयस्यैव चतुरस्रं विकासं चिन्तितवन्तः; अपि तु सर्वेषां पुरातनानां संस्कृतविद्यालयानामपि सर्वविधं समुन्नयनं दृष्टिपथमानयन्। एतदीये सम्पर्के स्वस्वविषयेषु व्यापृतो विद्वद्वर्गः कमप्यपूर्वं महिमानममन्यत।

एकदा कालिदासजयन्तीमहोत्सवावसरे उज्जयिनीनगर्य्यां काशीस्था बहवो विद्वांसोऽन्यप्रान्तीया अप्यनेके तत्रत्यनिदेशकमहोदयेन पण्डितप्रवरेण श्रीकमलेशदत्तत्रिपाठिना सादरं समाहूतास्तत्र समवेता आसन्। तस्मिन् समवाये मान्याः श्रीशुक्लवर्य्या अप्यासन्, अहमप्युपस्थित आसम्। गोष्ठी प्रारब्धाऽभवत्। तत्र व्याकरणदर्शने शक्तिस्वरूपविचारे प्रचाल्यमाने वाच्यवाचकभावरूपायाः शक्तेः स्वरूपं केनचिद् विदुषा उपस्थापितम्। तत्र झटित्येव मिथिलातः समायातेन प्रख्यातन्यायशास्त्रीयकौशलेन विद्वद्वरेण श्रीमदानन्दझामहानुभावेन तस्याः शक्तेः स्वरूपे बोधविषयत्वबोधजनकत्वरूपेण सखण्डत्वं प्रतिपादयता दोष उद्भावितः। श्रुत्वा चेमं खण्डनप्रकारं तत्रैव समासीनाः श्रीमदाचार्यप्रवरा जन्यजलत्वजातिं दृष्टान्तरूपेण उपस्थापयन्तस्तस्मिन् शक्तिस्वरूपेऽपेक्ष्यमाणमखण्डत्वं समर्थितवन्तः। सा च सरणिरीदृशी

आसीत्, यथा न्यायनये जन्यजलत्वावच्छिन्नकार्यतानिरूपितकारणताऽवच्छेदकतया जन्यजलत्वजातिः साध्यते, पुनः जन्यजलत्वाऽवच्छिन्न-जन्यतानिरूपितजनकताऽवच्छेदकतया जलत्वजातिः साधिता भवति। तत्र जन्यजलत्वस्य शाब्दिकी व्युत्पत्तिः क्रियते— जन्यं यज्जलं तस्य भावो जन्यजलत्वमिति। जले जन्यत्वं भवतु नाम, तत्र जातिर्जन्यजलत्वाभिधा नित्या एव, अखण्डा एव। तथैव वाच्यवाचकयोर्भावो धर्मविशेषोऽखण्डो-पाधिरूपेण यदि मन्यते वैयाकरणैस्तदा का क्षतिः?

समाधानं चैतदाकर्ण्य सर्वे पारिषद्या आश्चर्यचकिता अभवन् मन्मनस्यपि महान् प्रहर्षोऽजायत तद्वृत्तं स्मारं स्मारं दृढीभूतो भवत्येष विचारो यद् यतः स्मरणीयानां परमश्रद्धेयानां स्मृतौ प्रवर्तमानायां व्याख्यानमालायां शब्दार्थसम्बन्धविषयको निबन्धो व्याख्येयः स्यात्, यत्र शक्तिसम्बन्धे विमृश्यमाने वाच्यवाचकभावस्य प्रसङ्गः समापतेत्। अथ च प्रस्तूयमानेऽस्मिन् निबन्धे खण्डत्रितयं भविष्यति— शक्तिखण्डः, लक्षणाखण्डः, व्यञ्जनाखण्डश्च।

तत्र पूर्वं शब्दार्थयोर्वृत्तिरूपस्य सामान्यसम्बन्धस्य लक्षणविचारः कृतोऽस्ति, पुनस्तदीयभेदात्मना शक्तिर्लक्षणा व्यञ्जना च कीर्तिता। तत्र प्रथमे शक्तिशकले प्राचीनवैयाकरणैः सम्मानितं बोधजनकतारूपं शक्तिस्वरूपम्, न्यायदर्शनसमर्थितमीश्वरेच्छादिरूपं तत्स्वरूपं शाब्दिकचक्रचूडामणि-श्रीनागेशोक्तयुक्तिभिर्निराकृत्य वाच्यवाचकभावरूपशक्तेः समर्थनं कृतमस्ति। तत्र शक्तिग्रहप्रकारः, अपशब्देष्वपि शक्तिसत्ता, योगः, रूढिर्योगरूढिश्चेति शक्तेस्त्रैविध्यम्, पदानां यौगिक-रूढ-योगरूढ-यौगिकरूढभेदसत्तया चातुर्विध्यम्, संयोग-विप्रयोग-साहचर्यादिना शक्तेर्नियमनं च सप्रमाणं निरूपितं वर्तते। तार्किकाभिमतस्य शक्तिस्वरूपस्य वैशद्यम्, 'पदं गां वक्ति' इत्यादौ वच्धात्वर्थः, गो-गोत्व-समवायानां गोपदवाच्यता, पुनश्चैतत्प्रकरणस्यान्ते "न्यायनये वाच्यवाचकभावः" एतच्छीर्षको लेखो मान्यचरणानामेव प्राप्तो मया च योजितः।

शक्तिविषये न्यायदर्शनदिशा ये ये विचारा अत्र प्रस्ताविताः, ते सन्ति प्रायेण न्यायसिद्धान्तमुक्तावल्याः किरणावलीव्याख्याम्, वैयाकरणसिद्धान्त-लघुमञ्जूषाया रत्नप्रभाव्याख्यां तदीयटिप्पणीं चानुसृत्य।

द्वितीये लक्षणाशकले न्यायदर्शनीयं मीमांसादर्शनीयं लक्षणालक्षणं तदुदाहरणं च सम्यग् विवेचितमस्ति, शाब्दिकमते शक्यताऽवच्छेदकारोपरूपाया लक्षणायाः समर्थनम्, 'गङ्गायां मीनघोषौ, कमलानि कमलानि, कचतस्त्रस्यति वदनम्' इत्यादिस्थलेषु उक्तारोपरूपलक्षणायाः समन्वयप्रकारः, लक्षणाया नाना भेदाः — जहत्स्वार्था, अजहत्स्वार्था, गौणी, शुद्धा इत्यादिरूपेण सम्बोधिताः सन्ति।

तृतीये व्यञ्जनाभागे व्यञ्जनाया लक्षणाविषये विचारः, आलङ्कारिकाणां मते व्यञ्जनालक्षणम्, प्रस्थानरत्नाकरमते रत्नप्रभाकृन्मते च तल्लक्षणम्, व्यञ्जनावृत्तेरनङ्गीकारे मतान्तराणि, शक्त्या लक्षणया वा एषा गतार्था न वा? इत्येषा विचारणा, व्यञ्जना स्वरूपसती शाब्दबोधे हेतुः, ज्ञाता वा इत्येवं विचारः सप्रमाणं कृतोऽस्ति।

परन्तु मान्यवर्यश्रीशुक्लमहोदयानां 'न्यायनये वाच्यवाचकभावः' इत्यभिधाने निबन्धे यादृशः सूक्ष्मो गभीरो विचारो लक्ष्यते, स तु सर्वान् उक्तानुक्तविचारानतिशेते इति प्रतिभाति।

तत्र सङ्केतस्य सङ्केतीयविषयताया वा त्रिविधं स्वरूपं यत् प्रदर्शितम्, तदतीवगहनम्। तत्र प्रथमः सङ्केत उक्तः, तस्याग्रे तद्वत्त्वमित्यस्य शेषो बोध्यः, अत एवाग्रे प्रकारतावत्त्वं वा वाच्यत्वमित्यत्र वाशब्दोक्तिः सङ्गच्छते।

पुनश्च प्रकारतावत्त्वविचारे स्वनिरूपितविशेष्यतावत्त्वेत्यत्र स्वपदेन प्रकारता गृह्यत इति समीचीनमेव, किन्तु स्वावच्छिन्नसमवायसम्बन्धावच्छिन्नेत्यादिसम्बन्धेऽग्रिमसन्दर्भदर्शनेन तदपि स्वपदं प्रकारतापरमेव सिद्धान्तितमिति।

वाराणस्याम्<br>शरत्पूर्णिमायाम्,<br>वि. सं. २०५४

रामप्रसादत्रिपाठी<br>*सम्मानिताचार्यः,*<br>सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य<br>वाराणसी

# सङ्केतसूची

| | | |
|---|---|---|
| १. | भू. सा., शक्तिनि. | भूषणसारः शक्तिनिरूपणम्। |
| २. | म. भा., प्र. उ. | महाभाष्यम्, प्रदीप उद्द्योतश्च। |
| ३. | वै. भू. सा., शक्तिनि. | वैयाकरणभूषणसारः, शक्ति-निरूपणम्। |
| ४. | वै. सि. ल. म. | वैयाकरणसिद्धान्तलघुमञ्जूषा। |
| ५. | त. स., दी. टी., प्रत्य. ख. | तर्कसंग्रहः, दीपिका-टीका, प्रत्यक्ष-खण्डः। |
| ६. | न्या. सि. मु., प्र. ख. कारि. | न्यायसिद्धान्तमुक्तावली, प्रत्यक्ष-खण्डः, कारिका। |
| ७. | द्र. व्या. पञ्चकविवृतिटीका, पृ. | द्रष्टव्या व्याप्तिपञ्चकविवृतिटीका, पृष्ठम्। |
| ८. | सा. नि., गा. टी., पृ. | सामान्यनिरुक्तिः, गादाधरीटीका, पृष्ठम्। |
| ९. | श. वा., प्र. का., पृ. | शक्तिवादः, प्रथमकाण्डः, पृष्ठम्। |
| १०. | श. वा., ह. ना. टी., प्र. का. | शक्तिवादः, हरिनाथीटीका, प्रथम-काण्डम्। |
| ११. | ल. म., श. प्र. | लघुमञ्जूषा, शक्तिप्रकरणम्। |
| १२. | लक्षणा-प्र. | लक्षणाप्रकरणम्। |
| १३. | व्यु. वा., संसर्गतामतम्, कार. प्र. | व्युत्पत्तिवादः, संसर्गतामतम्, कारके प्रथमा। |

| | |
|---|---|
| १४. पा. सू. | पाणिनिसूत्रम्। |
| १५. भू. सा., शक्तिनि. | भूषणसारः, शक्तिनिरूपणम्। |
| १६. ल. म., र. प्र. युता., शक्तिनि. | लघुमञ्जूषा रत्नप्रभायुता, शक्तिनिरूपणम्। |
| १७. वा. प., ह. वृ. टी. | वाक्यपदीयम्, हरिवृषभटीका। |
| १८. यो. सू. | योगसूत्रम्। |
| १९. मा. मे. प्र. | मानमेयोदयप्रमेयनिरूपणम्। |
| २०. अ. सि., प्र. परि. | अद्वैतसिद्धिः, प्रथमपरिच्छेदः। |
| २१. श. वा., सामान्यका. | शक्तिवादः, सामान्यकाण्डम्। |
| २२. श्लो. वा. | श्लोकवार्तिकम्। |
| २३. श. कौ. | शब्दकौस्तुभम्। |
| २४. उ. ल. म., शक्तिनि. | उद्धृतम्, लघुमञ्जूषा, शक्तिनिरूपणम्। |
| २५. वै. सि. ल. म., र. प्र. | वैयाकरणसिद्धान्तलघुमञ्जूषा, रत्नप्रभा। |
| २६. वै. भू. सा., शक्तिनि. | वैयाकरणभूषणसारः, शक्तिनिरूपणम्। |
| २७. का. प्र., कारि. | काव्यप्रकाशः, कारिका। |
| २८. द्र., न्या. म., प्र. | द्रष्टव्यम्, न्यायमञ्जरी, प्रकरणम्। |
| २९. जै. द. | जैनदर्शनम्। |
| ३०. शा. भा. | शाबरभाष्यम्। |
| ३१. मी. द., शा. भा. | मीमांसादर्शनम्, शाबरभाष्यम्। |

| | |
|---|---|
| ३२. वा. रा., सु. का. | वाल्मीकीयरामायणम्, सुन्दर-काण्डम्। |
| ३३. पर. ल. म. | परमलघुमञ्जूषा। |
| ३४. वै. सि. ल. म., ल. नि. | वैयाकरणसिद्धान्तलघुमञ्जूषा, लक्षणानिरूपणम्। |
| ३५. ल. श. शे., संज्ञाप्र., पू. सि. सूत्रम् | लघुशब्देन्दुशेखरः, संज्ञाप्रकरणम्, पूर्वत्रासिद्धमिति सूत्रम्। |
| ३६. सा. नि. | सामान्यनिरुक्तिः। |
| ३७. रसगङ्गा. | रसगङ्गाधरः। |
| ३८. अ. सि., परि. | अद्वैतसिद्धिः, परिच्छेदः। |
| ३९. न्या. द., अ., आ., सू. | न्यायदर्शनम्, अध्यायः, आह्निकम्, सूत्रम्। |
| ४०. वे. प., विषयपरि. | वेदान्तपरिभाषा, विषयपरिच्छेदः। |
| ४१. व्यु. वा., प्र. का., टी. | व्युत्पत्तिवादः, प्रथमाकारकम्, टीका। |
| ४२. प्रौ. म. | प्रौढमनोरमा। |
| ४३. अजन्तपुँ. | अजन्तपुँल्लिङ्गम्। |
| ४४. न्या. द., वात्स्या. भा. | न्यायदर्शनम्, वात्स्यायनभाष्यम्। |
| ४५. का. प्र., द्वि. उ., सू. वा. टी. | काव्यप्रकाशः, द्वितीय-उल्लासः, सूत्रम्, वामनी-टीका। |
| ४६. न्या. सि. मु., किरणा., कारि. | न्यायसिद्धान्तमुक्तावली, किरणावली, कारिका। |
| ४७. न्या. सि. मु., दि. | न्यायसिद्धान्तमुक्तावली, दिनकरी-टीका। |

| | |
|---|---|
| ४८. न्या. सि. मु., श. ख. | न्यायसिद्धान्तमुक्तावली, शब्द-खण्डः। |
| ४९. वे. प., टीकाद्वयोपेता, आगमपरि. | वेदान्तपरिभाषा, टीकाद्वयोपेता, आगमपरिच्छेदः। |
| ५०. आ. परि. | आगमपरिच्छेदो वेदान्तपरिभाषायाः। |
| ५१. सा. द. | साहित्यदर्पणः। |
| ५२. भैर., परि. शे. टी. | भैरवी, परिभाषेन्दुशेखर-टीका। |
| ५३. वै. सि. ल. म., क. टी. | वैयाकरणसिद्धान्तलघुमञ्जूषा, कला-टीका। |
| ५४. वै. भू. सा., द. टी. | वैयाकरणभूषणसारः, दर्पणटीका। |
| ५५. सि. कौ. | सिद्धान्तकौमुदी। |
| ५६. सा. द., कुसुमटीका | साहित्यदर्पणः, कुसुमटीका। |
| ५७. प्र. र. | प्रस्थानरत्नाकरः। |

■

# विषयानुक्रमणिका

■

# अथ प्रथमः खण्डः

## शक्तिनिरूपणम्

### शाब्दिकनये वृत्तिस्वरूपस्य तज्ज्ञानकारणत्वस्य च विमर्शः

ननु केयं पदनिष्ठा वृत्तिरिति चेत्, उच्यते— शाब्दबोधानुकूल-पदार्थज्ञानजनकज्ञानविषयः पदपदार्थयोः सम्बन्धविशेष एव वृत्तिः। ध्वनितं चेदं वृत्तेः स्वरूपं महाभाष्ये "हलोऽनन्तराः संयोगः" इति सूत्रे। तत्र हि— "ग्रामशब्दोऽयं बह्वर्थोऽस्ति, शालासमुदाये वर्तते, तद्यथा 'ग्रामो दग्धः' इति। तद् यः सारण्यके ससीमके सस्थण्डिलके वर्तते, तमभि-समीक्ष्यैतत्प्रयुज्यते— अनन्तराविमौ ग्रामाविति" इत्युक्तम्[१]। अत्र 'अस्त्येव शालासमुदाये वर्तते' इति वाक्ये 'वर्तते' इत्यस्य वृत्तिरित्यर्थः, लडर्थस्याविवक्षितत्वात्, वृतुधातोः प्रकृतिभूतस्यैवार्थस्य विवक्षणात्। अन्यथा 'अस्ति'-पदोपादानं व्यर्थं स्यात्। एवञ्च अस्ति शालासमुदाये वृत्तिर्ग्रामशब्दस्य इत्यर्थः सम्पन्नस्तस्य वाक्यस्य। सङ्केतितश्चायमर्थ उद्द्योतकृताऽपि[२]। एवञ्च पदपदार्थयोर्वृत्तिनामकः कश्चन विलक्षणः सम्बन्धोऽस्तीत्यागतम्। 'तद् यः सारण्यके वर्तते, तमभिसमीक्ष्य' इति कथनेन पदज्ञानस्य पदनिष्ठवृत्तिज्ञानस्यापि च शाब्दबोधे हेतुता लभ्यते। "एतत् प्रयुज्यते अनन्तराविमौ ग्रामौ" इत्यनेन अनन्तराविमौ ग्रामाविति शाब्दबोधाकार एव दर्शितो भगवता।

अत्र च पदपदार्थयोः सम्बन्धविशेषत्वमेव वृत्तिलक्षणं बोध्यम्, शाब्दबोधानुकूलेत्यादिर्विषयान्तरस्तु न विशेषणम्[३], अपि तूपलक्षणम्[४]।

---

१. म. भा., नवा. १।१।७।

२. म. भा., प्र. उ. १।१।७।

३. "विद्यमानं सदितरव्यावर्तकं विधेयान्वयिविशेषणम्" इत्युच्यते—प्रौ. म., टिप्प., र. प्र., स्वरसन्धि., "अचः परस्मिन्" सूत्रम्।

४. "कादाचित्कं विधीयमानमपि सदितरव्यावर्तकमुपलक्षणम्" इत्युच्यते—प्रौ. म., र. प्र. टिप्प., स्वरसन्धि.— "अचः परस्मिन्" सूत्रम्।

अन्यथा वृत्तित्वग्रहे शाब्दबोधपदार्थज्ञानयोः कार्यकारणभावग्रहः, तद्ग्रहे च निरुक्तपदपदार्थसम्बन्धत्वात्मकवृत्तित्वग्रह इत्यन्योऽन्याश्रयदोषोऽत्र दुर्वारः स्यात्। अर्थे वर्तते शब्दो यया सम्बन्धव्यक्त्या सा वृत्तिः, वृतुधातोः करणे क्तिन्। एवञ्चोक्ते सम्बन्धे वृत्तिपदस्य योगरूढिशक्तिरत्यनुकूला। सङ्केतितं चैतल्लक्षणं श्रीकौण्डभट्टेन वैयाकरणभूषणसारे यद्यपि दोषवत्तया[१], तथापि मदुक्तरीत्या अस्य निर्दोषत्वमेव।

एवमेव शक्तिव्यञ्जनयोर्द्वयोरेव वृत्त्योरत्र मते सिद्धान्तयिष्यमाणत्वात् शक्ति-व्यञ्जनान्यतरत्वमपि वृत्तिलक्षणं निर्दुष्टमेव, अन्यतरत्वस्य तद्भिन्नभिन्नत्वरूपत्वेन गुरुशरीरत्वेऽपि भेदवृत्तिभेदत्वस्याखण्डोपाधित्व-स्वीकारेणाननुगमादिदोषवारणात्।

यत्तु लघुमञ्जूषाटीकायां रत्नप्रभायां "वृत्तिपदव्यवहार्यत्वम्, पदपदार्थोभयनिरूपितसंम्बन्धत्वं वा वृत्तित्वम्" इति वृत्तेर्लक्षणद्वयं प्रदर्शितम्[२]। तत्तु न रोचयामहे, तथा हि लक्षणज्ञानात्प्राग् अस्य पदस्यात्रार्थे वृत्तिरित्यादिर्व्यवहारो न सम्भवति, व्यावृत्तिर्व्यवहारो वा लक्षणस्य प्रयोजनमिति सिद्धान्तात्[३]। एवञ्च व्यवहारघटितस्य प्रथमलक्षणस्यासम्भवः, व्यवहारज्ञानाधीनत्वाल्लक्षणज्ञानस्य, लक्षणज्ञानाधीनत्वाच्च व्यवहारज्ञानस्येति अन्योऽन्याश्रयदोषग्रस्तत्वात्। द्वितीयमपि न सम्भवति, समवायकालिकादिष्वप्यतिप्रसङ्गात्।

यदि तु सकलपदपदार्थसाधारण एकजातीयः सम्बन्धः, समवायस्तु सकलपदानामाकाश[४] एव, न तु सर्वपदार्थे। कालिकोऽपि पदानामनित्येष्वेवार्थेषु[५],

---

१. वै. भू. सा., शक्तिनि., पृ. १९६।
२. वै. सि. ल. म., रत्नप्रभाटीका., पृ. १८।
३. त. स., दी. टी., प्रत्य. ख.।
४. "गुणगुणिनोः समवायः"— न्या. सि. मु., प्र. ख., कारि. ११।
५. "नित्येषु कालिकायोगात्"— व्या. पञ्चकविवृतिटीका, पृ. ३५।

न तु नित्येष्वित्युच्यते, तदा 'ओमिति ब्रूमहे' मदुक्त एव पर्यवसानात्। यद्यपि साकल्यस्य योगिगम्यत्वेनेदमपि लक्षणं नास्मदादिव्यवहारक्षमम्, तथापि पदपदार्थयोर्विजातीयसम्बन्धस्य वृत्तित्वमभ्युपेयम्, पदत्वपदार्थत्वयोरुपलक्षणविधया प्रवेशः, वैजात्यं च सम्बन्धे शाब्दबोधानुकूलपदार्थस्मृत्यनुकूलज्ञानविषयतयेति कथञ्चिद् वक्तुं शक्यते।

एवञ्चैकसम्बन्धिज्ञानमपरसम्बन्धिनं स्मारयतीति विधया[1] प्रकृते पदस्य श्रावणप्रत्यक्षे सति अर्थनिरूपितवृत्त्याख्यसम्बन्धस्य स्मरणम्, ततश्च सम्बन्धिनोऽर्थस्य स्मरणमिति वृत्तिज्ञानस्य कारणत्वमुपपन्नम्।

**न्यायदर्शने वृत्तिस्वरूपम्, शाब्दिकदृष्ट्या तन्निरासश्च**

शक्तिवादे[2] श्रीगदाधरभट्टाचार्येण "सङ्केतो लक्षणा चार्थे पदवृत्तिः" इत्युपन्यस्यता शक्तिलक्षणान्यतरत्वं वृत्तित्वमित्येवाभिप्रेतम्, अन्यथा वृत्तेः सामान्यस्वरूपनिरूपणे तद्विशेषनिरूपणं कथं युज्येत? विशेषजिज्ञासायां सामान्यज्ञानस्य हेतुत्वात्। तत्रैव टीकायां श्रीहरिनाथभट्टाचार्येण तु— "शाब्दबोधनिरूपिता या स्मृतित्वावच्छिन्ना जनकता, तन्निरूपिताव्यवहितोत्तरत्वसम्बन्धावच्छिन्नावच्छेदकतानिरूपितावच्छेदकतावत्सांसर्गिकविषयतात्वं वृत्तित्वम्" इति क्रमेण लक्षणं परिष्कृतम्[3]।

तदेतद् द्वयमपि शाब्दिकेभ्यो न रोचते, लक्षणाया अग्रे खण्डयिष्यमाणत्वेन प्रथमस्य वृत्तित्वज्ञाने एतद्घटककार्यकारणभावज्ञानम्, तज्ज्ञाने चोक्तवृत्तित्वज्ञानमित्यन्योऽन्याश्रयदोषेण स्मृतेर्व्यापारत्वाभावोपपादकेन नव्यानां सिद्धान्तेन[4] च द्वितीयस्याप्यसम्भवात्।

---

१. सा. नि., गा. टी., पृ. १।

२. श. वा., प्र. का., पृ. १।

३. श. वा., ह. ना. टी., प्र. का., पृ. ३।

४. एतन्निबन्धे लक्षणाप्र.।

**वृत्तिभेदनिरूपणम्**

सा चेयं वृत्तिस्त्रिधा— शक्तिर्लक्षणा व्यञ्जना चेति लघुमञ्जूषायां नागेशभट्टाः[१]। तत्र परमताभिप्रायेण लक्षणाया निरूपणम्। वक्ष्यते चेदमग्रे एवमेव[२]।

**शाब्दिकमते शक्तिस्वरूपम्**

तत्र प्रथमतः सूत्रभाष्यादिसम्मता तादात्म्यसम्बन्धरूपैव पदपदार्थयोः शक्तिः। तथा हि "वृद्धिरादैच्[३], अदेङ्गुणः[४]" इत्यादिषु सूत्रेषु शक्तिग्राहकेषु समानविभक्तिकनिर्देशं करोति भगवान् सूत्रकारः। यथा 'नीलो घटः' इत्यत्र तादात्म्यसम्बन्धेन[५] नीलविशिष्टो घट इति बोधः, तथैवात्रापि तादात्म्यसम्बन्धेन वृद्धिपदविशिष्ट आदैच इति बोधः। एवञ्च तादात्म्यसम्बन्धस्यैव शक्तित्वं पर्यवस्यति।

अत्र "वृद्धिरादैच्" इति सूत्रे भाष्यकारोऽपि ब्रवीति "द्वयोरेव सामानाधिकरण्यम्, विशेषणविशेष्ययोर्वा, संज्ञासंज्ञिनोर्वा" इति[६]। अत्रैवोद्द्योतकारः स्पष्टं ब्रूते— "तादात्म्यमेव शब्दर्थयोः शक्तिः" इति[७]।

वाक्यपदीयटीकाकृता श्रीहरिवृषभेणापि— "तादात्म्यमेव शब्दार्थयोर्नादाभिव्यक्तस्यान्तःकरणसन्निवेशिनः शब्दस्यार्थबोधने कारणम्" इत्युक्त्या[८] उक्तपक्ष एव पूर्णं समर्थितः।

---

१. ल. म., श. प्र., पृ. १६।
२. एतन्निबन्धे लक्षणाप्र.।
३. पा. सू., १।१।१।
४. पा. सू., १।१।२।
५. व्यु. वा. संसर्गतामतम्, कार. प्र.।
६. म. भा., नवा. १।१।१।
७. म. भा., प्र. उ. १।१।१।
८. वा. प. १।२४-२६।

आचार्यः श्रीभर्तृहरिस्तु—

**इन्द्रियाणां स्वशिष्येष्वनादिर्योग्यता यथा ।**
**अनादिरर्थैः शब्दानां सम्बन्धो योग्यता तथा ।।**

इति कारिकया बोधजनकत्वरूपां योग्यतामेव शब्दनिष्ठां शक्तिं मन्यते[१]। अनुमोदन्ते चैनं मार्गं श्रीभट्टोजिदीक्षित-श्रीकौण्डभट्टप्रभृतयो वैयाकरणमूर्धन्याः[२]।

शाब्दिकमूर्धन्यः श्रीनागेशभट्टस्तु समीचीनयुक्तिभिर्बोधजनकत्वस्य सम्बन्धत्वमेवासम्भावयन् शब्दार्थोभयनिष्ठं वाच्यवाचकभावलक्षणसम्बन्धं शक्तिरूपत्वेन स्वीकृत्य, उक्तस्य तादात्म्यस्य तद्द्योतकत्वं सिद्धान्तितवान्[३]।

**तादात्म्यस्वरूपनिरूपणम्**

ननु किमिदं तादात्म्यमिति चेदत्रोच्यते— तद्भिन्नत्वे सति तदभेदेन प्रतीयमानत्वमेव तादात्म्यस्य स्वरूपं सिद्धान्तितं शाब्दिकमते। तत्र शब्दस्यार्थे भेदो वास्तवः, अभेद आरोपितः, इति न भेदाभेदयोरत्र विरोधः। ध्वनितं चैतत् स्वरूपं वाक्यपदीयटीकायां श्रीहरिवृषभेण— "बुद्ध्या गृहीतार्थप्रतिपादनाय शब्दप्रयोगादर्थः शब्दस्य निमित्तम्, कार्यकारणयोश्चाभेदाध्यवसायात् सोऽयमिति प्रतीयमानं तादात्म्यम्" इत्युक्त्या[४]। अत्र कार्यकारणयोरभेदाध्यवसायादिति कथनेनाभेदांशस्याध्यस्तत्वं बोध्यते। स्फुटमुक्तमिदं स्वरूपं लघुमञ्जूषायां श्रीनागेशभट्टेन[५]। तत्र भेदस्योद्भूतत्वविवक्षया 'अस्यार्थस्यायं शब्दो वाचकः' इत्यादिर्भेदेन व्यवहारः। "तपरस्तत्कालस्य[६]", "तस्य वाचकः प्रणवः"[७] इत्यादिसूत्राणि चास्य पक्षस्योपष्टम्भकानि।

---

१. वा. प. ३।३।३९।
२. भू. सा., शक्तिनि.।
३. ल. म., र. प्र. युता., शक्तिनि. पृ. १६-१७।
४. वा. प., ह. वृ. टी. १।२४-२६।
५. वै. सि. ल. म., र. प्र. युता, शक्तिनि., पृ. २५।
६. पा. सू., १।१।६९।
७. यो. सू., १।१।२७।

अभेदस्योद्भूतत्वविवक्षया 'देवदत्तोऽयम्' इत्यादिव्यवहारः सङ्गच्छते। वृद्धिरादैजित्यादिसूत्राणि[१] चास्य पक्षस्योपोद्बलकानि।

योगदर्शनभाष्येऽपि इदमेव तादात्म्यस्य स्वरूपं स्पष्टमभिहितमस्ति। "सङ्केतस्तु पदपदार्थयोरितरेतराध्यासरूपः स्मृत्यात्मकः, योऽयं शब्दः सोऽर्थः, योऽर्थः स शब्दः[२]" इति।

**तादात्म्यस्य स्वरूपविषये मतान्तराणि**

न्यायदर्शनेऽपि तादात्म्यस्य स्वरूपमुक्तम्— "अभेदस्तादात्म्यम्" इति। स च स्वनिष्ठोऽसाधारणो धर्मस्तद्व्यक्तित्वादिरूपो बोध्यः। उक्तं च व्युत्पत्तिवादे श्रीगदाधरभट्टाचार्येण— "स्वसामानाधिकरण्यस्वप्रतियोगि-वृत्तित्वोभयसम्बन्धेन भेदविशिष्टं यत् तदन्यत्वरूपं तादात्म्यम्"[३]।

घटत्वादयः सर्वे धर्मा उभयसम्बन्धेन भेदविशिष्टा एव, तद्भिन्नं तद्व्यक्तित्वमेव। 'नीलो घटः' इत्यत्र तद्व्यक्तित्वरूपतादात्म्यसम्बन्धेन नीलविशिष्टे घट इति बोध एतन्मते।

पूर्वमीमांसादर्शने वास्तवभेदाभेदघटितमेव तादात्म्यम्। 'द्रव्यं घटः' इत्यत्र जात्यादिरूपधर्मेण भेदः, व्यक्त्यात्मना विशेष्येणाभेदः, इत्यवच्छेदकभेदेनैकत्रैव वृक्षे कपिसंयोग-तदभावयोः सत्त्वमिव न तयोर्विरोध इति स्थितम्[४]।

अद्वैतवेदान्तदर्शने त्वभेद एव तादात्म्यम्। 'सर्वं खल्विदं ब्रह्म' इति श्रुत्या प्रपञ्चमात्रे ब्रह्मणोऽभेदात् परस्परमपि प्रपञ्चेऽभेद एव तदभिन्नाभिन्नस्य तदभिन्नत्वनियमात्। किन्तु नात्यन्तिकोऽयमभेदः, नीलत्वघटत्वयोर्भेदेन नीलघटयोस्तदसम्भवात्। अतश्च भेदसमानाधिकरणोऽभेदस्तादात्म्यमुच्यते।

---

१. पा. सू., १।१।१।
२. ल. म., शक्तिनि.।
३. व्यु. वा., कार. प्र.।
४. मा. मे., प्र. निरूपणम्।

अत एव च घटपटयोर्न तादात्म्यम्। तत्रोक्तश्रुतिबलेन अभेदो वास्तवः, भेदस्तु आरोपितः, इति न तयोर्विरोधः[१]। तादात्म्यमखण्डोपाधिरेवेत्यपि अद्वैतमतविशेष इति।

**अत्र निष्कर्षः**

अत्र न्यायदर्शनसम्मतं तादात्म्यं न रोचते विद्वन्मूर्धन्येभ्यः, 'नीलो घटः' इत्यादिषु नीलत्वघटत्वयोर्विशेषणीभूतधर्मयोर्भेदात्। मीमांसासम्मतमपि तन्न सम्यक्, कल्पनागौरवात् श्रुतिविरुद्धत्वाच्च। तस्माद् भेदसमानाधिकरणाभेदरूपमेव तादात्म्यमभ्युपेयम्। तत्र व्यवहारदशायां भेदो वास्तवोऽभेद आरोपितः। परमार्थदशायामभेदो वास्तवः, भेदः काल्पनिक इति विशेषः[२]।

**न्यायशास्त्राभिमतं शक्तिस्वरूपम्**

न्यायदर्शनेऽपि पदेन पदार्थस्य सम्बन्ध एव शक्तिः। स च "अस्मात् पदादयमर्थो बोद्धव्यः" इत्याकारा पदजन्यबोधविषयत्वप्रकारिका अर्थविशेष्यिका या ईश्वरेच्छा 'इदं पदमिममर्थं बोधयतु' इत्याकारा अर्थविषयकबोधजनकत्वप्रकारिका पदविशेष्यिका वा या ईश्वरेच्छा, तद्रूपः। किन्त्वेवं सति आधुनिकसङ्केतिते देवदत्तादिपदे शक्तिर्न सिध्येदिति तादृशेच्छामात्रं शक्तिः, न तु ईश्वरीयत्वमपि विशेषणतया तत्र निविष्टमिति[३]। तस्याश्चेच्छाया विषयत्वलक्षणः सम्बन्धः पदे पदार्थे जन्यजनकभावसम्बन्धे बोधे चेत्येषां समेषां वाचकत्वं वाच्यत्वं वा प्रसक्तम्, तथापि तस्यां बोधनिरूपितजनकतावत्त्वेन विषयो वाचकः, बोधविषयत्वेन विषयो वाच्य इति जन्यजनकभावादौ न वाचकत्वातिप्रसङ्ग इति नव्यन्यायसिद्धान्तः।

यद्वा तादृशबोधविषयको बोध एव शक्तिरित्यपि न्यायमतविशेषः।

---

१. अ. सि., प्र. परि., पृ. ५९-७८।

२. तदेव।

३. श. वा., सामान्यका.।

**शाब्दिकदृष्ट्या उक्तमतखण्डनप्रकारः,**
**नान्तरीयकतया आदौ शक्तिग्रहप्रकारश्च**

तदेतन्मतं वैयाकरणेभ्यो न रोचते। तथा हि— घटमानयेति प्रयोजकवृद्धेनोक्ते सति घटमानयन्तं प्रयोज्यवृद्धं पश्यन् व्युत्पित्सुर्बालोऽनुमिनोति— अयं प्रयोज्यवृद्धो घटानयनं मदिष्टसाधनमिति ज्ञानवान्, घटानयनविषयकचेष्टावत्त्वात्, 'यो यद्विषयकचेष्टावान् स तद्विषयकज्ञानवान्'। यथा अश्वारोहणविषयकचेष्टावान् देवदत्तोऽश्वारोहणविषयकज्ञानवान्, तथा चायं प्रयोज्यवृद्धोऽपीति, अयमपि घटानयनविषयकज्ञानवानिति। ततश्चेदं प्रयोज्यवृद्धज्ञानं घटमानयेति वाक्यजन्यम्, तद्वाक्यश्रवणाव्यवहितोत्तरमेव जातत्वादित्यनुमानेन तस्मिन् वाक्ये तज्ज्ञानजनकत्वं निश्चीयते। तत आवापोद्वापाभ्यामन्वयेन व्यतिरेकेण च सहचारेण पदेऽपि बोधजनकत्वं निर्धार्य्यते। तच्चेदं पदे वाक्ये वा बोधजनकत्वं पदस्य वाक्यस्य वार्थेन सह सम्बन्धाभावे नोपपद्यते, विषयेण घटादिना सह सम्बद्धानामेव चक्षुरादीनां (प्रमाणानां) बोधजनकत्वदर्शनात्। न हि घटेन सह सम्बन्धं विना चक्षुरादीन्द्रियं तज्ज्ञानं जनयितुं प्रभवति।

तथा च पदवाक्ययोर्बोधजनकत्वस्यान्यथानुपपत्त्या कल्प्यमानः शक्तिरूपः कारणसम्बन्धो ज्ञानरूपकार्योत्पत्तेः प्रागेवापेक्ष्यते, तदानीं नैयायिकाभिमतस्य बोधजनकत्वघटितस्योक्तेच्छारूपस्य सम्बन्धस्य स्वयमेवासिद्धत्वेन उक्तजनकतानियामकतया कल्पयितुमशक्यत्वात्।

यदि तु विषयतासम्बन्धेन यत्र पदार्थे शाब्दबोधः, तत्रैव प्रयोज्योपस्थितीयविषयतासम्बन्धेन पदे पदज्ञानं वा वर्तत इति नोक्तदोष इत्युच्यते, तथापि इच्छाबोधयोरन्यतरस्य शक्तित्वे विनिगमनाविरह एव। ननु जानाति, इच्छति, ततो यतत इति सर्वानुभवसिद्धे कार्यकारणभावे ज्ञानस्य कारणतया प्राथम्येनोपस्थितत्वात् तस्यैव शक्तित्वमुचितमिति चेत्, न, ज्ञानस्य कार्यकारित्वे इच्छायत्नयोरुभयोः सहकारित्वापेक्षा, इच्छायास्तत्त्वे

तु यत्नस्यैव वेति लाघवेनेच्छाया एव तत्त्वाङ्गीकारः[१]। भगवतोऽपि सृष्टिकरणे सिसृक्षैव प्रधानसंहकारिणी, न तु ज्ञानमिति[२]।

किञ्च 'अस्मात् पदादयमर्थो बोद्धव्यः, इदं पदमिममर्थं बोधयतु' इतीच्छाया एवाकारौ भवितुमर्हतः, न तु बोधस्य, "इच्छार्थेषु लिङ्लोटौ" इति सूत्रेणेच्छार्थकधातूपपदत्व[१] एव.. लिङ्गादीनां साधुत्वान्वाख्यानात्। अत्रेच्छापदमुपपदमस्त्येव, अतोऽपि इच्छाया एव शक्तित्वमिति यदि विभाव्यते, तदापि 'इदमस्माद् भवतु' इतीच्छाविषयत्वमेव दण्डादावपि घटादिजनकत्वं स्यादिति बहूपप्लवः स्यात्।

न च प्रमारूपकार्यस्थल एवैषा कल्पना न तु सर्वत्रेति नास्ति कोऽपि दोष इति वाच्यम्, प्रमाणानां जनकत्वतद्घटितसम्बन्धातिरिक्तसम्बन्धेनैव प्रमेयसम्बद्धानां ज्ञानजनकत्वदर्शनेन इह जनकत्वघटितस्य तस्य सम्बन्धत्वानौचित्यात्। अन्यथा 'धूमाद् वह्निज्ञानं जायताम्' इतीच्छाविषयत्वमेव हेतुसाध्ययोः सम्बन्धः स्यादिति व्याप्तिज्ञानेऽनुमितिहेतुत्वमुच्छिन्नमेव स्यात्। यदि तु विनापीच्छां घनगर्जितेन गगने मेघानुमितिरनुभूयत एवेति नेच्छाघटितस्य सम्बन्धत्वं कल्पयितुं शक्यत इत्युच्यते, तदपि अकिञ्चित्करमेव, सम्बन्धिभिन्नत्वे सति द्विष्ठत्वे च सति विशिष्टबुद्धिनियामकत्वस्य सम्बन्धलक्षणस्य अत्रेच्छायामसम्भवात्। न हि विषय इच्छावानिति व्यवहारः क्वापि। एवं चान्ततः सम्बन्धत्वाभावादेवायं पन्था नाभ्युपगतः शाब्दिकैः[३]।

### मीमांसकसम्मतं शक्तिस्वरूपम्

मीमांसादर्शनेऽपि वाच्यवाचकभावरूपैव शक्तिः पदपदार्थयोः स्वीकृताऽस्ति। ननु शब्दनिष्ठशक्तिज्ञाने सत्येव शाब्दबोधः, शाब्दबोधे च सत्येवोक्तशक्तिस्वरूपज्ञानमित्यन्योऽन्याश्रयदोषेण कथमिदं शक्तिस्वरूपं

१. वै. सि. ल. म., र. प्र., शक्तिनि., पृ. १६-१७।

२. तदेव।

३. तदेव, पृ. १६-२३।

प्रमितं स्यादिति चेत्, शास्त्रदीपिकायां प्रथमे तर्कपाद एव "स्वभावसिद्धत्वात्" इति समाहितत्वात्[१]। इदमेव वाक्यपदीये "अनादिर्योग्यता तथा" इत्यत्र अनादिपदेनोक्तम्[२]। अतोऽनादित्वाद् (स्वभावसिद्धत्वाद्) नास्ति दोषलेशः।

श्लोकवार्त्तिकेऽप्ययं सम्बन्धः साक्षादुक्तः[३]। लघुमञ्जूषायाः संवाद्येवैतन्मतम्[३]।

**उक्तशक्तिस्वरूपेषु निष्कर्षः**

सूत्रभाष्यादिसम्मतं पदपदार्थयोस्तादात्म्यमेव शक्तिः। न च भेदाभेदरूपस्य तस्य सम्बन्धत्वं न युक्तमिति वाच्यम्, वृत्तित्वानियामकत्वेऽपि सम्बन्धिता-नियामकत्वेनास्यापि सन्बन्धत्वाभ्युपगमे क्षतिविरहात् स्वस्वामिभावादिवत्। "वृद्धिरादैच्" इत्यादौ समानविभक्तिकत्वेन प्रयोगस्यैव तस्य तत्त्वे प्रमाणाच्च। स्वीकृतं च केवलाभेदरूपतादात्म्यस्यापि सम्बन्धत्वं नैयायिक-वरिष्ठैः। द्विष्ठत्वमपि द्वित्वविशिष्टत्वरूपमुपपाद्यते तदीयैः। वैशिष्ट्यं च स्वसामानाधिकरण्य-स्वाश्रयाश्रयवृत्तित्वान्यतरसम्बन्धेन। एवमेव तत्तद्रूपस्य तादात्म्यस्य सम्बन्धत्वं स्वीकृतमेवान्यैरपि दर्शनतत्त्वविद्भिः।

यत्तु "वाच्यवाचकभावरूपैव मुख्या शक्तिः, तादात्म्ये तु तद्द्योतकतया आरोपितं शक्तित्वम्" इति मञ्जूषाकृतः, तन्न मनोहरम्, मुख्यत्वे सम्भवति आरोपितत्वस्वीकारे मानाभावात्। वाच्यवाचकभावेऽन्योऽन्याश्रयदोषग्रासाच्च, अनादित्वविशेषणेन तत्परिहारे गौरवाच्च। तद्रीत्या अस्यापि वृत्तित्वानियामकत्वेन सम्बन्धत्वासम्भवाच्च।

तादात्म्यघटकस्य भेदाभेदान्यतरस्योद्भूतत्वेन जायमानो यः 'अस्येदं नामधेयम्, सोऽयम्' इत्यादिव्यवहारः, तस्य तादात्म्यपक्ष एव निर्भराच्च।

---

१. "अस्ति तु सम्बन्धः प्रत्याय्यप्रत्यायकत्वलक्षणः, असत्येव सम्बन्धान्तरे स्वभावत एव शब्दोऽर्थस्य प्रत्यायकः, अर्थश्च प्रत्याय्य इत्ययमेव सम्बन्धो भविष्यति"।
— शा. दी., १ पा., पृ. ३५६-५८।

२. वा. प. ३।३।२९।

३. श्लो. वा.।

'योग्यतालक्षणः सम्बन्धः' इति पक्षेऽपि तादात्म्यं योग्यता इत्यर्थः कर्तव्य एतदेकवाक्यतया। अत एवोक्तं श्रीहरिवृषभेण — "यथेन्द्रियं प्रकाशकम्, विषयः प्रकाश्यः, तद्वद् यः शब्दः स प्रकाशकः, यश्चार्थस्तस्य प्रकाश्यस्तत्र द्वयोः प्रकाश्यप्रकाशकभावेन तादात्म्ययोग्यतानुमितिः कर्तव्या" इति[१]।

यदपि बोधजनकत्वरूपयोग्यताऽपि पक्षान्तरम्, तच्चापि न युक्तिसहम्, मञ्जूषाकृतैव आत्माश्रयादिदोषप्रदर्शनेन निरस्तत्वात्।

एतेन शब्दे बोधजननसामर्थ्यमेव शक्तिरित्यपि[२] पक्षान्तरं निरस्तं वेदितव्यम्। शक्तेरपि कार्यजनने सम्बन्धस्यैव नियामकत्वात्, दीपगतप्रकाशकत्वशक्तावपि तस्य प्रकाशने घटादिना सह संयोग एव नियामकः। उक्तं च श्रीहरिणाऽपि —

उपकारः स यत्रास्ति धर्मस्तत्रानुगम्यते ।
शक्तीनामप्यसौ शक्तिर्गुणानामप्यसौ गुणः[३] ।। इति।

**तादात्म्यस्य शक्तित्वेऽपि अग्न्यादिशब्देन न मुखदाहः**

ननु पदपदार्थयोस्तादात्म्येऽभ्युपगतेऽग्न्यादिशब्दोच्चारणे मुखं कथं न दह्यते? गुडशब्दोच्चारणे च कथं न मुखे माधुर्यमनुभूयते? इति चेत्, उच्यते—आरोपिताभेदघटितयोरेव शब्दार्थयोस्तादात्म्यस्य स्वीकारेणादोषात्। न ह्यारोपिताभेदेनैकस्य सम्बन्धिनः कार्यमपरेण सम्बन्धिना कर्तुं शक्यम्। शाब्दिकनये "बौद्ध एवार्थः शक्यः, बौद्ध एव शब्दः शक्तः" इति सिद्धान्ताच्च। न च बौद्धे पदार्थे दाहादिशक्तिमत्वमनुभूयते।

किञ्च, कारणतावच्छेदकसंयोगसम्बन्धेनाग्नेस्तत्राभावेन बाह्यपदार्थवादेऽपि न दाहप्रसङ्ग इति सर्वं सुस्थम्[४]।

---

१. वा. पं., ह. वृ. टी. १।२४-२६।
२. श. कौ., उद्धृ. ल. म. शक्तिनि.।
३. वा. प. ३।३।६।
४. वै. सि. ल. म., र. प्र., पृ. ६९।

## एकस्मिन् शब्देऽनेकार्थनिरूपितं तादात्म्यमेकमनेकं वा ?

एकशब्देऽनेकार्थनिरूपितं तादात्म्यमेकमपि। एतद्विषयेऽस्ति पक्षत्रयम्। तथा हि— अर्थभेदात्तादात्म्यभेदः शब्दभेदश्चेत्येकः पक्षः, अर्थभेदेऽपि तादात्म्यभेदः शब्दैक्यं चेति द्वितीयः पक्षः, अर्थभेदेऽपि तादात्म्यैक्यं शब्दैक्यं चेति तृतीयः पक्षः।

"हलोऽनन्तराः संयोगः" इति सूत्रे भाष्यकृता सूचितमिदं पक्षत्रयम्[1]। तथा हि तत्र 'ग्रामशब्दोऽयं बह्वर्थः' इत्युक्त्या अर्थभेदेऽपि शब्दैक्यमेवेत्यायाति। अत्र पक्षे तादात्म्यरूपा शक्तिराश्रयस्य शब्दस्यैक्येनैका, एकत्राम्रफले रूपरसगन्धादीनामनेकेषामेकतादात्म्यवत्। "निरूपकस्यार्थस्य भेदाद् भिन्नान्येव तादात्म्यानि" इत्यपि मतम्। इतोऽग्रे "तद् यः सारण्यके ससीमके सस्थण्डिलके वर्तते" इत्युक्त्या अर्थभेदाच्छब्दे भेद इत्यायाति। अत्र पक्षे तु तादात्म्यभेद एव, निरूपकाश्रययोरुभयोरपि भेदात्। एवं चार्थभेदस्तादात्म्यभेदः शब्दभेद इत्येकः पक्षः(१)। अर्थभेदस्तादात्म्यभेदः शब्दैक्यमिति द्वितीयः पक्षः(२)। अर्थभेदस्तादात्म्यैक्यं शब्दैक्यमिति तृतीयः पक्षः(३)। लाघवादेष तृतीय एव पक्षः सिद्धान्तितया मन्तव्यः।

"सरूपाणाम्" इति सूत्रेऽपि भाष्ये स्फुटमिदं पक्षत्रयम्[2]। "प्रत्यर्थं शब्दाभिनिवेशः, किमिदं प्रत्यर्थमिति? अर्थमर्थं प्रति प्रत्यर्थम्, शब्दनिवेशात्" अनयोक्त्या अर्थभेदेन शब्दभेदः स्फुटमायाति। पुनरग्रे भाष्ये "यदपि ह्यर्थावर्थौ प्रति तदपि प्रत्यर्थमेव, यदपि अर्थानर्थान् प्रति तदपि प्रत्यर्थमेव" इत्यभिधानेन अर्थभेदेऽपि न शब्दभेद इत्यागच्छति।

## अपशब्देऽपि शक्तिरस्त्येवेति शब्दशास्त्रसिद्धान्तः

सा चेयं तादात्म्यलक्षणा शक्तिः साधुशब्देष्विवापशब्देष्वप्यस्त्येव। ततोऽपि निराबाधं व्यवहारादिना बोधानुभवात्। उक्तं च भगवता

---

१. म. भा., नवा. १।१।१।

२. तदेव, १।१।१।

भाष्यकृता— "गौः इत्यस्य शब्दस्यार्थे बहवो गावी, गोणी, गोता, गोपोतलिका इत्यादयोऽपभ्रंशा वर्तन्ते" इत्यर्थकम् "गौः इत्यस्य शब्दस्य गाव्यादयोऽपभ्रंशाः" इति। "समानायामर्थावगतौ शब्देन चापशब्देन च तत्र धर्मनियमः क्रियते, शब्देनैवार्थोऽभिधेयः, नापशब्देनेति। एवं क्रियमाणमभ्युदयकारि भवति" इति च।

हरिणाऽप्युक्तम्—

शिष्टेभ्य आगमात् सिद्धाः साधवो धर्मसाधनम्।
अर्थप्रत्यायताभेदे विपरीतास्त्वसाधवः ॥

पारम्पर्यादपभ्रंशा विगुणेष्वभिधातृषु ।
प्रसिद्धिमागता येषु तेषां साधुरवाचकः ॥

दैवी वाग् व्यवकीर्णेयमशक्तैरभिधातृभिः ।
अनित्यदर्शिना त्वस्मिन् वादे बुद्धिविपर्ययः[१] ॥

भूषणकारेणापि समीचीनयुक्तिभिरयं पक्षः प्रसाधितः। यथा— "अपभ्रंशानामशक्तत्वे ततो बोध एव न स्यात्, न च साधुस्मरणात् ततो बोधः, तत्राविदुषां पामराणामपि बोधात्। न च शक्तिभ्रमात् तेभ्यो बोधः, बोधकत्वस्याबाधेन शक्तिग्रहस्याभ्रमत्वात्। किञ्च, विनिगमनाविरहाद् भाषाशब्देष्वपि शक्तिरावश्यकी। न हि तेषु नानात्वं प्रतिबन्धकं कल्पयितुं शक्यम्, संस्कृतवद् महाराष्ट्र्यादिभाषायाः सर्वत्रैकत्वेन प्रत्येकं विनिगमनाविरहतादवस्थ्यात्"[२]।

लघुमञ्जूषाकृताऽपि नानाप्रमाणैरयं पक्षः सिद्धान्तितः, विपक्षश्च निराकृतः[३]।

---

१. वा. प. १।२७, पृ. १५३-५४।
२. वै. भू. सा., प्रमादर्पण., शक्तिनि., पृ. ३३९-४२।
३. वै. सि. ल. म., र. प्र. युता, पृ. ५४-८६।

**एतद्विषये वैशेषिकदर्शनसंवादः**

"सामयिकः शब्दादर्थप्रत्ययः" (७।२।२०) इति सूत्रयता महर्षिकणादेनापि शब्दापशब्दयोस्तुल्यं सामयिकत्वमङ्गीकृतमस्ति, सामयिकत्वं चात्र समय-(सङ्केत)गृहीतसम्बन्धजन्यत्वम्" इति मञ्जूषाकारो व्याख्यत्[१]।

**अत्र काव्यप्रकाशसंवादः**

काव्यप्रकाशकृन्मतेऽपि अपभ्रंशे स्वारसिकी शक्तिरस्त्येव, अन्यथा शक्यसम्बन्धादिरूपलक्षणाऽपि तत्र कथं सिध्येत्?

किञ्च, लक्ष्यस्य व्यञ्जकतायाम् "साहेन्ती" इत्याद्युदाहरणदानमपि कथं सङ्गच्छेत[२]?

**अत्र न्यायदर्शनविसंवादः**

न्यायदर्शने त्वपभ्रंशानामनादित्वाभावेन साधूनामेवानादित्वेन साधुष्वेव वाचकत्वं व्यवस्थापितम्। उक्तं च मञ्जरीकृता "स्वाध्यायाध्ययनसमये शब्दं यथोचितमात्रानुस्वारस्वरादिरूपसमुत्थितमुच्चारयति, आचार्यस्तादृशमेव शिष्यं प्रत्युच्चारयति। सोऽपि शिष्यो यदा गुरुर्भविष्यति, तदा स्वशिष्यं तथैव शिक्षयिष्यति। आचार्यो यदा शैशवे शिष्य आसीत्, तदा अन्येन गुरुणा शिक्षितोऽभूत्, सोऽपि तदन्येन, सोऽपि तदन्येन इत्येवमनादित्वम्।

इत्थमेव यदि गाव्यादीनां गवादिवत् प्रमादतः सुपरिरक्षितः प्रयोगः, तथैव तेभ्योऽर्थप्रतिपत्तिपूर्वको व्यवहारः, तदा अनादिगवादिशब्दसमानविषया एव गाव्यादयः स्युः।

न चैवमस्त्विवति शक्यमभ्यनुज्ञातुमिदानीमेव भ्रश्यतां तेषां प्रत्यक्षत उपलब्धेरिति। तस्मादवश्यं तावदद्यत्वे गाव्यादयः प्रकारान्तरोपपत्ति-

---

१. वै. सि. ल. म., पृ. ६४।

२. का. प्र., २।७।

सम्भवनाङ्कुरप्रभवाः सन्तो न गवादिशब्दसमानविधित्वमध्यवसातुं शक्नुवन्ति इति[१]।

## उक्तविषये मीमांसादर्शनविमतिः

पूर्वमीमांसका अपि अपभ्रंशे शक्तिं नाङ्गीकुर्वन्ति। अशक्त्या असामर्थ्येन साधूनामेव तथोच्चारणमर्थतोऽवमवतश्चानुरूपत्वादित्यर्थकं "तदशक्तिश्चानुरूपत्वात्" इति जैमिनिसूत्रं तत्र प्रमाणमस्ति[२]।

भाष्यकृता श्रीशबरस्वामिनाऽपि "प्रतीयते हि गाव्यादिभ्यः सास्नादिमानर्थः, तस्मादितो वर्षशतेऽप्यस्य सम्बन्धोऽर्थेन सह आसीदेव, ततः परेण, ततः परतरेणेत्येवमपशब्दानामप्यनादित्वम्, 'हस्तः करः पाणिः' इतिवत् साधुत्वं चाशङ्क्य[३] 'अन्यायश्चानेकशब्दत्वम्' इति सूत्रेण[४] न चैष न्यायो यत्सदृशाः शब्दा एकमर्थमभिनिविशमानाः सर्वे विच्छिन्नपारम्पर्य्या एव" इत्यर्थकेन समाहितम्। ततोऽर्थावबोधस्तु सादृश्यात् साधुशब्देऽवगते सति सम्भविष्यति। 'हस्तः, करः' इत्यादीनां पर्यायाणां त्वभियुक्तोपदेशात् सर्वेषामर्थेन सम्बन्धोऽनादिरिति विनिगमकाभावात् समेषां साधुत्वमिति च व्याख्यायते।

"शब्दे प्रयत्ननिष्पत्तेरपराधस्य भागित्वम्" इति सूत्रेऽपि[५] शबरस्वामिना अपराधात् प्रवृत्ता गाव्यादयो न नियोगतो विच्छिन्नपारम्पर्याः" इति स्फुटमुक्तम्। तस्मात् शब्दानामेवानादित्वं साधुत्वं च नापशब्दानामिति मीमांसाराद्धान्तश्चकास्ति।

## उक्तविषये निष्कर्षः

निःसंशयमपभ्रंशेष्वपि शक्तिरस्त्येव आनुपूर्व्यवच्छेदेन[६], यथा साधुशब्दे शक्तिस्तथैवानुपूर्व्याः सत्त्वे को नाम समर्थो यदपभ्रंशेषु शक्तिमवहेलयेत्।

---

१. द्र. न्या. म., प्रक., पृ. ३८६-८७।
२. जै. द. १।३।२८।
३. शा. भा. १।३।२४।
४. मी. द., शा. भा. १।३।२८।
५. तदेव, १।३।२५।
६. तदेव, १।३।२५।

(३–६) उद्धृतमिदं, वै. सि. ल. म., पृ. ७१-७२।

यदप्युच्यतेऽधुनैव केनचिन्नूतनमपभ्रष्टम्, तत्रापि शक्तिस्तिष्ठतु नाम। एवं रीत्या अनवस्था ध्रुवं प्रसज्येतेति, तदपि न सम्यक्। शक्ततावच्छेदकानुपूर्व्याः सत्त्वे का हानिः, तत्र शक्त्यभ्युपगमे? अन्यथा ततो बोध एव कथं भवेत्?

किञ्च यदुक्तम्[१]— "गाव्यादयः शब्दा न अनादयः, अपि तु साधवो गवादिशब्दा एवेति न तेषु शक्तिः, अनादिशब्देष्वेव तत्स्वीकारेण व्यवहारोपपत्तौ, आधुनिकेषु गाव्यादिषु तत्स्वीकारे गौरवात्, वैयर्थ्याच्चेति। तदपि न रुचिकरम्, स्वयमेव भवद्भिर्मीमांसकैर्मन्यते नानीदृशं जगत्" इति। किं वा वाल्मीकीयरामायणे सुन्दरकाण्डे श्रीहनूमतोच्यते[२]—

**यदि वाचं प्रदास्यामि द्विजातिरिव संस्कृताम् ।**
**रावणं मन्यमाना मां सीता भीता भविष्यति ।।**इति।

अनयोक्त्याऽनुमीयते यत् संस्कृता असंस्कृता चेति द्विविधा वाक् प्राक्कालत एव प्रचलति। अन्यथा 'संस्कृता' इति वाचो विशेषणं कथं सङ्गच्छेत? वाग्रूपे विशेष्ये संस्कृतात्वस्य सर्वदा सत्त्वेन व्यभिचाराभावात्। "सम्भवव्यभिचाराभ्यां स्याद् विशेषणमर्थवत्" इति प्रसिद्धनियमविरोधात्।

एवमेव अध्यात्मरामायणेऽपि भगवता रामेणोक्तम्—

**बहु व्याहरतानेन न किञ्चिदपभाषितम्।।**इति।

अनयाप्युक्त्या अपभ्रंशानामनादिता निश्चीयत एवेति साधुवदेव, तत्र शक्तिः प्रमितैवेति निष्कर्षः।

**शक्तिभेदनिरूपणम्**

सा चेयं शक्तिस्त्रिधा — योगो रूढिर्योगरूढिश्चेति भेदात्। तत्र शास्त्रकृत्कल्पितावयवार्थाप्रतीतौ यदर्थनिरूपितं प्रकृति-प्रत्यय-समुदायमात्रे बोधकत्वम्, तत्पदे सा तदर्थनिरूपिता शक्ती रूढिरित्युच्यते, यथा

---

१. मी. द., शा. भा. १।३।२५।
२. वा. रा., सु. का. ३०।१८।

मणिनूपुरशब्दादौ। न हि मणिशब्दे शब्दार्थकाद् मण्धातोः कर्तरि इन्प्रत्यये सति निष्पन्नादपि मणिशब्दात् शब्दकर्तृरूपोऽर्थः प्रतीयते, अपि तु रत्नरूप एवार्थः, स च रूढिमहिम्नैव।

शास्त्रकृत्कल्पितावयवार्थमात्रबोधकत्वं यत्र पदे, तत्र योगशक्तिरभ्युपेया। यथा पाचक-पाठकादिशब्देषु। अत्र पचिधातुना विक्लित्तिस्तदनुकूलो व्यापारश्च बोध्यते। अक्प्रत्ययेन कर्तृरूपोऽर्थः। एवञ्च मिलित्वा विक्लित्त्यनुकूलव्यापाराश्रयरूपार्थबोधः सम्पद्यते।

यत्र शास्त्रकल्पितावयवार्थान्वितविशेष्यभूतार्थनिरूपितं समुदाये बोधकत्वम्, तत्र योगरूढिः। यथा पङ्कजादिपदेषु। अत्र पङ्कजनिकर्त्रभिन्नं पद्ममिति बोधः[१]।

परन्त्वेतच्छक्त्याश्रयीभूतं पदं यौगिकम्, रूढम्, योगरूढं चेति त्रिविधमेवेति न, अपि तु यौगिकरूढमिति चतुर्थमपि बोध्यम्। यथा अश्वगन्धाशब्दोऽश्वसम्बन्धवत्तया वाजिशालाबोधे यौगिकम्, औषधिविशेषे रूढं चेति कदाचिद् यौगिकम्, कदाचिद्रूढम्, यौगिकरूढमित्युच्यते।

**क्वचन शब्दनिष्ठायाः शक्तेर्नियमनमपि**

संयोगविप्रयोगादिभिरेषा शक्तिर्नियम्यतेऽपि। उक्तं च हरिणा —

**संयोगो विप्रयोगश्च साहचर्यं विरोधिता ।**
**अर्थः प्रकरणं लिङ्गं शब्दस्यान्यस्य सन्निधिः ।।**

**सामर्थ्यमौचिती देशः कालो व्यक्तिः स्वरादयः ।**
**शब्दार्थस्यानवच्छेदे विशेषस्मृतिहेतवः[२] ।।**इति।

शब्दार्थस्यानवच्छेदेऽनिश्चये (सन्देहे) तदपाकरणद्वारेण एते संयोगादयो विशेषस्मृतिहेतवो निर्णयकारणानि भवन्तीति यावत्।

---

१. वै. सि. ल. म., शक्तिनि.।
२. वा. प. २।३१७-१८।

तत्र 'सवत्सा धेनुः' इत्यत्र धेनुपदेन गोधेनुरेव गृह्यते, वत्ससंयोगात्। 'अवत्सा धेनुः' इत्यत्रापि गोधेनुरेव ग्राह्या, वत्सविप्रयोगात्। 'रामलक्ष्मणौ' इत्यत्र परस्परसाहचर्यादुभौ दाशरथी एव गृह्येते। 'रामार्जुनगतिस्तयोः' इत्यत्र विरोधात् परशुरामसहस्रबाह्वोरेव ग्रहणम्। 'अञ्जलिना जुहोति, अञ्जलिना सूर्यमुपतिष्ठते' इत्यादौ जुहोत्यादिपदार्थवशाद् अञ्जलिपदस्य तत्तदाकाराञ्जलिपरत्वम्। 'सैन्धवमानय' इत्यत्र प्रकरणवशेनाश्वलवणयोरन्यतरस्य ग्रहणम्। 'अक्ताः शर्करा उपदधाति' इत्यत्र 'तेजो वै घृतम्' इति घृतस्तुतिरूपाल्लिङ्गाद् 'अक्ताः' इत्यस्य घृतसाधनाञ्जनपरत्वम्। 'रामो जामदग्न्यः' इत्यत्र जामदग्न्यपदसन्निधानेन रामपदेन परशुरामो ग्राह्यः। 'अभिरूपाय कन्या देया' इत्यत्राभिरूपतरायेत्यर्थः सामर्थ्यात् प्रतीयते। सामर्थ्यमेवात्र मुख्यं निर्णायकम्, संयोगादयस्तु तद्व्यञ्जकप्रपञ्चः, तैः सामर्थ्यस्यैवाभिव्यक्तेः।

**यश्च निम्बं परशुना यश्चैनं मधुसर्पिषा ।**
**यश्चैनं गन्धमाल्याभ्यां सर्वस्य कटुरेव सः ।।**

इत्यादौ परशुना इत्यस्य छेदनार्थत्वम्, औचित्यात्। एवमेवापराण्यप्युदाहरणानि लघुमञ्जूषादौ[१] स्पष्टानि। संख्यासंज्ञासूत्रे भाष्येऽपि एष नियमः स्फुटीकृतोऽस्ति। तत्र हि — "अर्थात् प्रकरणाद्वा लोके कृत्रिमाकृत्रिमयोः कृत्रिमे कार्यसम्प्रत्ययो भवति। अर्थो वास्यैवंसंज्ञकेन भवति, प्रकृतं वा तत्र भवति, इदमेवंसंज्ञकेन कर्तव्यमिति। अतश्च अर्थात् प्रकरणाद्वा, अङ्ग ! हि भवान् ग्राम्यं पांशुलपादमप्रकरणसमागतं ब्रवीतु गोपालकमानय, कटजकमानयेति, उभयगतिस्तस्य भवति, साधीयो यष्टिहस्तं गमिष्यति" इत्युक्तम्[२]।

अत्र प्रदीपः — "अर्थः सामर्थ्यम्, यथा गोपालकमानय, माणवकमध्यापयिष्यतीति, यष्टिहस्तस्याध्यापनासम्भवात् संज्ञिनो ग्रहणम्। प्रकरणं

१. ल. म., शक्तिनि., पृ. ९०-९१।
२. म. भा., १।१।२२।

प्रस्तावः, यथा भोजनप्रकरणे सैन्धवमानयेति लवणे प्रतीतिः, गमनप्रकरणे अश्वे" इति[१]।

### तार्किकाभिमतं शक्तिस्वरूपम्

तार्किकाणां नये ईश्वरेच्छा शक्तिः, तस्या नानाविधं स्वरूपम्। तत्र 'अस्माच्छब्दादयमर्थो बोद्धव्यः' इति स्वरूपं गृहीत्वा विश्लेषणं क्रियते — अत्र समीपवर्तिबोधकेन इदंशब्देन उच्चारणकर्मीभूतं परामृश्यते, तस्याभेदेन (विशेषणविशेष्यभावेन) शब्देऽन्वयः। शब्दपदोत्तरपञ्चम्या जन्यत्वमर्थः, तत्र शब्दस्य निरूपितत्वसम्बन्धेनान्वयः। जन्यत्वस्य च बोद्धव्यपद-घटकबुधधात्वर्थे बोधेऽन्वयः स्वरूपसम्बन्धेन (आश्रयत्वसम्बन्धेन)। बोधस्य च निरूपितत्वसम्बन्धेन तव्यप्रत्ययार्थविषयतायामन्वयः। तस्याश्च स्वरूप-सम्बन्धेनार्थेऽन्वयः। एवं सति — "इदमभिन्नशब्दनिरूपितजन्यतावद्-बोधनिरूपितविषयतावानर्थः" इत्यर्थविशेष्यिका बोधविषयत्वप्रकारिका ईश्वरेच्छा। पुनश्च विनिगमकाभावात् — 'इदं पदमिममर्थं बोधयतु' इति पदविशेष्यिका बोधजनकत्वप्रकारिकाऽपि ईश्वरेच्छा भवति। तत्रेदमर्थस्याभेदेनार्थेऽन्वयः, अर्थस्य च अम्विभक्त्यर्थविषयतायां निष्ठत्वसम्बन्धेनान्वयः, विषयत्वस्य च निरूपकत्वसम्बन्धेन बुधधात्वर्थे बोधेऽन्वयः, बोधस्य च निरूपितत्वसम्बन्धेन जनकत्वरूपे णिजर्थेऽन्वयः, तस्य च निरूपितत्वसम्बन्धेन आख्यातार्थे आश्रयत्वेऽन्वयः, तस्य च स्वरूपसम्बन्धेन पदेऽन्वयः। तिङन्तस्थले प्रथमान्तार्थमुख्यविशेष्यकबोधस्यैव नैयायिकैः स्वीकृतत्वात् पदविशेष्यि-केश्वरेच्छाया इदं स्वरूपम्।

तथा च — इदमभिन्नार्थनिष्ठविषयतानिरूपकबोधनिष्ठजन्यतानिरूपित-जनकतानिरूपिताश्रयतावत् पदमिति वाक्यार्थबोधः सम्पद्यते।

एवम् — "एतत्पदजन्यबोध एतदर्थनिष्ठविषयतानिरूपको भवतु" इति बोधविशेष्यिका अर्थनिष्ठविषयतानिरूपकत्वप्रकारिकाऽपि ईश्वरेच्छा शक्तिः। पुनश्च "एतदर्थनिष्ठा विषयता एतत्पदजन्यबोधनिरूपिता भवतु"

---

१. म. भा., प्र. १।१।२२।

इति विषयताविशेष्यिका एतत्पदजन्यबोधनिरूपितत्वप्रकारिका ईश्वरेच्छा। इत्थं नानाविधं स्वरूपमीश्वरेच्छारूपायाः शक्तेर्द्रष्टव्यम्। एषु प्रथमं यदुक्तं स्वरूपम् अर्थविशेष्यकं बोधविषयत्वप्रकारकम्, तत्स्वरूपं विशदीक्रियते—

"अभेदसम्बन्धावच्छिन्नेदन्त्वावच्छिन्नप्रकारतानिरूपिता शब्दत्वाऽवच्छिन्ना या विशेष्यता तादृशविशेष्यत्वाऽवच्छिन्ना शब्दत्वाऽवच्छिन्ना निरूपितत्व-सम्बन्धाऽवच्छिन्ना या प्रकारता, तादृशप्रकारतानिरूपिता जन्यत्वत्वाऽवच्छिन्ना या विशेष्यता, तादृशविशेष्यत्वाऽवच्छिन्ना जन्यत्वत्वाऽवच्छिन्ना स्वरूप-सम्बन्धाऽवच्छिन्ना या प्रकारता, तादृशप्रकरतानिरूपिता बोधत्वाऽवच्छिन्ना च या विशेष्यता, तादृशविशेष्यत्वाऽवच्छिन्ना बोधत्वाऽवच्छिन्ना निरूपितत्व-सम्बन्धाऽवच्छिन्ना या प्रकारता, तादृशप्रकारतानिरूपिता विषयतात्वाऽवच्छिन्ना या विशेष्यता, तादृशविशेष्यत्वाऽवच्छिन्ना विषयतात्वावच्छिन्ना स्वरूप-सम्बन्धाऽवच्छिन्ना या प्रकारता, तादृशप्रकारतानिरूपितार्थत्वाऽवच्छिन्ना या विशेष्यता तादृशविशेष्यतानिरूपिका ईश्वरेच्छा शक्तिः" इति परिष्कृतं स्वरूपं फलति।

पदविशेष्यकेश्वरेच्छायाः परिष्कृतं स्वरूपमित्थं बोध्यम्—

"अभेदसम्बन्धाऽवच्छिन्नेदन्त्वावच्छिन्ना या प्रकारता, तन्निरूपितार्थ-त्वाऽवच्छिन्नार्थनिष्ठा या विशेष्यता, तदवच्छिन्नार्थत्वाऽवच्छिन्ना निष्ठत्वसम्बन्धावच्छिन्ना या प्रकारता, तन्निरूपिता विषयतात्वाऽवच्छिन्ना या विशेष्यता, तदवच्छिन्ना निरूपकत्वसम्बन्धाऽवच्छिन्ना विषयतात्वाऽवच्छिन्ना या प्रकारता, तन्निरूपिता बोधत्वाऽवच्छिन्ना या विशेष्यता, तदवच्छिन्ना बोधत्वाऽवच्छिन्ना निरूपितत्वसम्बन्धावच्छिन्ना या प्रकारता, तन्निरूपिता जनकतात्वाऽवच्छिन्ना या विशेष्यता, तदवच्छिन्ना जनकतात्वाऽवच्छिन्ना निरूपितत्वसम्बन्धाऽवच्छिन्ना या प्रकारता, तन्निरूपिता आश्रयतात्वावच्छिन्ना या विशेष्यता, तदवच्छिन्ना आश्रयतात्वाऽवच्छिन्ना स्वरूपसम्बन्धाऽवच्छिन्ना या प्रकारता, तन्निरूपिता पदत्वाऽवच्छिन्ना या विशेष्यता, तन्निरूपिका ईश्वरेच्छा" इति प्रतिफलितं स्वरूपम्।

"ईश्वरेच्छायाः शक्तित्वे वाचकत्वं वाच्यत्वं च कीदृशम् ?"

तत्र 'अस्माच्छब्दादयमर्थो बोद्धव्यः', 'इदं पदमिममर्थं बोधयतु' इत्यनयोर्मध्ये पूर्वं वाच्यत्वस्वरूपं कीदृशमित्युच्यते— इच्छीयबोधनिष्ठ-विषयितानिरूपितविषयतावत्त्वसम्बन्धेन इच्छावत्त्वं वाच्यत्वम्।

ईश्वरेच्छाविषयो यो बोधस्तन्निष्ठजन्यतानिरूपितजनकताख्यविषय-ताश्रयत्वसम्बन्धेनेच्छावत्त्वं वाचकत्वम्।

अत्रेदमालोच्यते यद् विषयतासम्बन्धस्य वृत्तिताया अनियामकतया 'घटो घटपदशक्यो न पटः' इत्यत्र शाब्दबोधो न स्यात्। येन सम्बन्धेन यत्पदार्थवत्त्वं यत्र भासते, तत्र नञ्समभिव्याहारस्थले तत्सम्बन्धाऽवच्छिन्न-तत्पदार्थनिष्ठप्रतियोगिताकाभाववत्त्वं प्रतीयत इति नियमेन वृत्तित्वानियामक-सम्बन्धस्य प्रतियोगिताऽनवच्छेदकत्वनियमेन विषयतायाश्चाभावीयप्रतियोगिता-वच्छेदकत्वासम्भवेन 'घटपदजन्यबोधीयविषयतावत्त्वसम्बन्धेन ईश्वरेच्छावान् घटः, उक्तसम्बन्धाऽवच्छिन्नेच्छानिष्ठप्रतियोगिताकाभाववान् पटः' इति बोधस्य प्रतियोगितायामुक्तसंसर्गाऽवच्छिन्नत्वस्यासम्भवेन वक्तुमशक्यत्वाद् इति चेदुच्यते— तादृशेच्छीयविशेष्यताया एव शक्तित्वम्, तत्र च स्वरूपसम्बन्ध एव प्रतियोगिताऽवच्छेदकतया स्वीकरणीय इति सर्वमनवद्यम्।

एवञ्च पदपदार्थविशेषनियन्त्रितायास्तादृशविशेष्यतायाः शक्तित्वे सन्मात्रविषयिण्या ईश्वरेच्छायाः सर्वत्र सत्त्वेन सर्वपदस्य सर्वपदार्थ-त्वाऽऽपत्तिर्निरस्ता।

**'पदं गां वक्ति' इत्यादिवाक्यानां न्यायदर्शनदिशा शाब्दबोधविचारः, घटघटत्वसमवायानां घटपदशक्यताविचारश्च**

'पदं गां वक्ति, पदेन गौरुच्यते' इत्यादौ अस्मात्पदादयमर्थो बोद्धव्यः' इतीच्छायाः सङ्केतरूपत्वे बोधविषयत्वप्रकारतानिरूपितेश्वरेच्छीयविशेष्यत्वं वच्यादिधात्वर्थः, तत्र 'पदं वक्ति' इत्यत्र तादृशविशेष्यतायाः परम्परया निरूपकप्रकारताश्रयत्वात्मककर्तृत्वं कर्त्राख्यानेन बोध्यते, तच्च स्वरूपेण पदेऽन्वेति। गामित्यत्र द्वितीयार्थो वृत्तित्वम्। तथा च गोनिष्ठा या बोध-

विषयत्वप्रकारतानिरूपितेश्वरेच्छीयविशेष्यता, तादृशविशेष्यतानिष्ठा विशेष्यता-निरूपितनिरूपितत्वनिष्ठप्रकारत्वावच्छिन्नविशेष्यतानिरूपितबोधत्वावच्छिन्न-प्रकारत्वावच्छिन्नविशेष्यतानिरूपितजन्यत्वसम्बन्धावच्छिन्नप्रकारताश्रयतावद् गोपदमिति बोधः। तादृशाद्याश्रयतातोऽत्र कर्त्राख्यातार्थः। 'पदेन गौरुच्यते' इत्यत्र तु तादृशविशेष्यतायां आश्रयत्वसम्बन्धेनार्थेऽन्वयः, गोपदेनेत्यत्र तृतीयार्थ आधेयत्वम्, तथा च गोपदजन्यबोधविषयत्वनिष्ठप्रकारता-निरूपितेश्वरेच्छीयविशेष्यताश्रयतावान् गौरिति बोधः।

अथ 'पदं गां वक्ति, पदेन गौरुच्यते' इत्यादौ 'इदं पदममुमर्थं बोधयतु' इतीश्वरेच्छाया: सङ्केतरूपत्वे बोधजनकत्वप्रकारतानिरूपितेश्वरेच्छीय-विशेष्यत्वं धात्वर्थः। 'पदं गां वक्ती'त्यत्र धात्वर्थीभूततादृशविशेष्यताया आश्रयत्वसम्बन्धेन पदेऽन्वयः, तथा च गोपदनिष्ठा (गोपदनिरूपिताधेयतावती) या बोधजनकत्वनिष्ठप्रकारतानिरूपितेश्वरेच्छीयविशेष्यता तादृशविशेष्यता-निष्ठविशेष्यतानिरूपितनिरूपितत्वनिष्ठप्रकारत्वावच्छिन्नविशेष्यतानिरूपित-प्रकारत्वनिष्ठप्रकारत्वावच्छिन्नविशेष्यतानिरूपितजनकत्वनिष्ठप्रकारत्वावच्छिन्नविशेष्यता-निरूपितबोधत्वावच्छिन्नप्रकारत्वावच्छिन्नविशेष्यतानिरूपितविषयित्वसम्बन्धा-वच्छिन्नप्रकारताश्रयो गौरिति बोध इति। तादृशाद्याश्रयतान्तः कर्माख्यातार्थ इति बोध्यम्। 'जात्याकृतिव्यक्तयः पदार्थः' इति सूत्रेण घटघटत्वसंसर्गाणां घटपदशक्तिमत्वं दर्शितम्, अत एव वाच्यत्वे सति वाच्योपस्थितिप्रकारत्वं प्रवृत्तिनिमित्तलक्षणमुपपद्यते, शब्दाश्रयत्वेऽतिव्याप्तिवारणाय वाच्यत्वे सतीति। अवयवसंयोगात्मकाकृतिवारणाय वाच्यवृत्तित्वे सतीति। स्थूलदधन्यतिव्याप्ति-वारणाय वाच्योपस्थितिप्रकारत्वमिति। इच्छीयविशेष्यता घटे घटत्वे समवाये च वर्त्तते, तत्र आश्रयत्वसम्बन्धावच्छिन्नघटपदजन्यबोधविषयत्व-निष्ठप्रकारतानिरूपितेश्वरेच्छीयविशेष्यता घटे, अवच्छेदकत्वसम्बन्धावच्छिन्न-घटपदजन्यबोधविषयत्वनिष्ठप्रकारतानिरूपितेश्वरेच्छीयविशेष्यता घटत्वे, अवच्छेदकतावच्छेदकत्वसम्बन्धावच्छिन्नघटपदजन्यबोधविषयत्वनिष्ठ-प्रकारतानिरूपितेश्वरेच्छीयविशेष्यता समवाये वर्तते। आकारस्तु घटो घटपदजन्यबोधविषयो भवतु, घटत्वं घटपदजन्यबोधविषयतावच्छेदकं

भवतु, समवायो घटपदजन्यबोधविषयतावच्छेदकतावच्छेदको भवत्विति। अत्र तत्पदज्ञानजन्यबोधविषयतात्वावच्छिन्नप्रकारतानिरूपितविशेष्यतासम्बन्धे नेश्वरेच्छावत्त्वस्यैव तत्पदशक्यत्वाद् ईश्वरेच्छाया ऐक्येऽपि न घटपदात् पटबोधापत्तिः, न वा गङ्गापदात् तीरबोधापत्तिः, पटरूपेऽर्थे घटपदज्ञानजन्यबोधविषयतात्वावच्छिन्नप्रकारतानिरूपितविशेष्यतासम्बन्धेनेश्वरेच्छावत्त्वात्मकस्य घटपदशक्यत्वस्य विरहात्। तीरात्मकेऽर्थे च — गङ्गापदशक्यत्वस्य विरहात्, तीरात्मकेऽर्थे च गङ्गापदज्ञानजन्यबोधविषयतात्वावच्छिन्नप्रकारतानिरूपितविशेष्यतासम्बन्धेनेश्वरेच्छावत्त्वात्मकस्य गङ्गापदशक्यत्वस्य अभावाच्चेति।

**न्यायनये वाच्यवाचकभावः**

व्यवहारो हि विश्वस्य जीवातुः। स च शब्दार्थाभ्यां प्रवर्तते, जनोऽर्थं विज्ञाय शब्देन परं बोधयति, एतद्बोधनमेव व्यवहारः। अयं च शब्दार्थयोः सम्बन्धाधीनः। स च संस्कृतवाङ्मये शक्तिलक्षणाव्यञ्जनातात्पर्यभेदाद् वृत्तिनाम्ना चतुर्धा चर्चितः। न्यायशास्त्रे तु स शक्तिलक्षणात्मना द्विविध एव वर्णितः। अस्मिन् लेखे शक्तिरेव वाच्यंवाचकभावात्मतया संक्षेपेण व्युत्पादयिष्यते।

**वाच्यवाचकभावः**

वाच्यश्च वाचकश्चेति वाच्यवाचकौ, तयोर्भावो वाच्यवाचकभावः। वाच्यवाचकशब्दयोर्द्वन्द्वसमासः, समस्तस्य वाच्यवाचकशब्दस्य भावशब्देन सह षष्ठी-तत्पुरुषः। 'द्वन्द्वान्ते श्रूयमाणं पदं प्रत्येकमभिसम्बध्यते' इति न्यायेन भावशब्दस्य वाच्यशब्देन वाचकशब्देन च सह सम्बन्धः। अत उक्तशब्दो वाच्यभावो वाचकभाव इत्युभयरूपः पर्यवस्यति। तत्र वाच्यभावो वाच्यता, वाचकभावश्च वाचकता, वाच्यता तावदर्थे पदस्य सम्बन्धः, वाचकता च पदेऽर्थस्य।

**वाच्यता**

यस्मिन्नर्थे यः शब्द आद्येन वक्त्रा सङ्केतितः सोऽर्थस्तस्य शब्दस्य वाच्यः, स च शब्दस्तस्यार्थस्य वाचकः। यथा गवि गोशब्द आद्येन वक्त्रा परमेश्वरेण सङ्केतित इति गौः गोशब्दस्य वाच्यः, गोशब्दश्च गोरूपार्थस्य

वाचकः। सङ्केतश्च साधारणतया त्रिधा— १. अयमर्थोऽस्माच्छब्दाद्बोद्धव्यः, २. अयं शब्दोऽमुमर्थं बोधयतु, ३. अस्यार्थस्य बोधोऽस्माच्छब्दाज्जायताम् इत्याकारकः। एषु प्रथमोऽर्थविशेष्यकशब्दजन्यबोधविषयत्वप्रकारकः, द्वितीयः शब्दविशेष्यकार्थविषयकबोधजनकत्वप्रकारकः, तृतीयश्चार्थविषयकबोध-विशेष्यकशब्दजन्यत्वप्रकारकः। विनिगमकाभावेनैषु प्रत्येकमेव शब्दार्थयोः सम्बन्धः। सम्बन्धत्वं तदविनाभाविसप्रतियोग्यनुयोगिकत्वं चास्य तयोरनिवार्य-सम्बन्धकयोः सम्बन्धान्तरानुपपत्त्या सिद्धम्।

### प्रथमसङ्केतानुसारेण वाच्यत्वम्

शब्दजन्यबोधविषयत्वनिष्ठाश्रयत्वसम्बन्धावच्छिन्नप्रकारतासम्बन्धेन सङ्केतः, सङ्केतीयशब्दजन्यबोधविषयत्वनिष्ठाश्रयत्वसम्बन्धावच्छिन्नप्रकारतावत्त्वं प्रथमसङ्केतानुसारिवाच्यत्वम्। प्रकारतावत्त्वं च स्वनिरूपितविशेष्यत्वस्वा-वच्छिन्नावच्छेदकत्वसम्बन्धावच्छिन्नप्रकारतानिरूपितविशेष्यत्वस्वावच्छिन्न-प्रकारतानिरूपितसंसर्गतावच्छेदकत्वैतदन्यतमसम्बन्धेन। 'गौः गोशब्द-जन्यबोधविषयो भवतु' इत्यर्थके 'गौः गोशब्दाद्बोद्धव्यः' इत्याकारके सङ्केते गोशब्दजन्यबोधविषयत्वं गव्याश्रयतासम्बन्धेन प्रकारः, गोत्वे च समवाय-सम्बन्धावच्छिन्नावच्छेदकता-समवायनिष्ठावच्छेदकतानिरूपितावच्छेदकता-सम्बन्धेन प्रकारः। अत उक्तसङ्केतीया शब्दजन्यबोधविषयत्वनिष्ठाश्रयत्व-सम्बन्धावच्छिन्नप्रकारता स्वनिरूपितविशेष्यतासम्बन्धेन गवि, स्वावच्छिन्न-समवायसम्बन्धावच्छिन्नावच्छेदकत्वसम्बन्धावच्छिन्नप्रकारतानिरूपितविशेष्यता-सम्बन्धेन गोत्वे, स्वावच्छिन्नप्रकारतानिरूपितसंसर्गतानिरूपितावच्छेदकत्वनिष्ठा-वच्छेदकतानिरूपितावच्छेदकतासम्बन्धेन समवाये विद्यत इति गोगोत्वसमवायाः गोशब्दस्य वाच्याः।

### प्रथमसङ्केतानुसारेण वाचकत्वम्

अर्थविशिष्टाश्रयत्वसम्बन्धावच्छिन्नप्रकारत्वावच्छिन्नविषयत्वनिष्ठविशेष्यता-निरूपितप्रकारत्वावच्छिन्नबोधनिष्ठविशेष्यतानिरूपितप्रकारत्वावच्छिन्नजन्यत्व-निष्ठविशेष्यतानिरूपितप्रकारतावत्त्वसम्बन्धेन सङ्केतः, सङ्केतीयतादृश-प्रकारतावत्त्वं वा प्रथमसङ्केतानुसारिवाचकत्वम्। विषयत्वनिष्ठाश्रयत्व-

सम्बन्धावच्छिन्नप्रकारतायामर्थवैशिष्ट्यं स्वनिष्ठविशेष्यतानिरूपितत्व-स्वनिष्ठ-विशेष्यतानिरूपितसमवायसम्बन्धावच्छिन्नावच्छेदकत्वसम्बन्धावच्छिन्नप्रकारत्वावच्छिन्नत्व-स्वनिष्ठावच्छेदकतानिरूपितावच्छेदकतानिष्ठावच्छेदकतानिरूपितसंसर्गतानिरूपित-प्रकारत्वावच्छिन्नत्वैतदन्यतमसम्बन्धेन। शब्दजन्यबोधविषयत्वनिष्ठाश्रयत्व-सम्बन्धावच्छिन्नप्रकारतायां गौः स्वनिष्ठविशेष्यतानिरूपितत्वसम्बन्धेन, गोत्वं स्वनिष्ठविंशेष्यतानिरूपिंतप्रकारत्वावच्छिन्नत्वसम्बन्धेन, समवायश्च स्वनिष्ठावच्छेदकतानिरूपितावच्छेदकतानिरूपितसंसर्गतानिरूपितप्रकारत्वा-वच्छिन्नत्वसम्बन्धेन वर्तत इति गोगोत्वसमवायानामुक्तसम्बन्धस्य गोशब्दे सत्त्वेन गोशब्दो गोगोत्वसमवायानां वाचकः।

## द्वितीयसङ्केतानुसारेण वाच्यत्वम्

शब्दनिष्ठविशेष्यतानिरूपितजनकत्वनिष्ठप्रकारत्वावच्छिन्नविशेष्यतानिरूपित-बोधनिष्ठप्रकारत्वावच्छिन्नविशेष्यतावत्त्वसम्बन्धेन सङ्केतः, सङ्केतीयतादृश-विशेष्यतावत्त्वं वा द्वितीयसङ्केतानुसारिवाच्यत्वम्। विशेष्यतावत्त्वं च स्वनिरूपितविषयत्वसम्बन्धावच्छिन्नप्रकारत्व-स्वावच्छिन्नविशेष्यतानिरूपित-स्वावच्छिन्नविषयत्वसम्बन्धावच्छिन्नप्रकारत्व-स्वावच्छिन्नविशेष्यतानिरूपित-विषयत्वनिष्ठसंसर्गतानिरूपितावच्छेदकत्वनिष्ठावच्छेदकतानिरूपितावच्छेदकत्वनिष्ठा-वच्छेदकतानिरूपितावच्छेदकत्वैतदन्यतमसम्बन्धेन।

गोशब्दो गोविषयकबोधजनको भवत्विति सङ्केते बोधे गौ-र्विषयतासम्बन्धेन, गोत्वं च स्वावच्छिन्नविषयतासमवायनिष्ठावच्छेदकताक-स्वनिष्ठावच्छेदकताकविषयतासम्बन्धेन प्रकारः। अत उक्तसङ्केतीया गोशब्दनिष्ठविशेष्यतानिरूपितबोधनिष्ठप्रकारत्वावच्छिन्नबोधनिष्ठविशेष्यता स्वनिरूपितविषयत्वसम्बन्धावच्छिन्नप्रकारतासम्बन्धेन गवि, स्वावच्छिन्न-विशेष्यतानिरूपितस्वावच्छिन्नविषयत्वसम्बन्धावच्छिन्नप्रकारतासम्बन्धेन गोत्वे, स्वावच्छिन्नविशेष्यतानिरूपितप्रकारतानिरूपितसंसर्गतानिरूपितावच्छेदकतानिरूपिता-वच्छेदकतानिरूपितावच्छेदकतासम्बन्धेन समवाये विद्यत इति गोगोत्वसमवायानां गोशब्दवाच्यत्वम्।

## द्वितीयसङ्केतानुसारेण वाचकत्वम्

अर्थविशिष्टबोधनिष्ठविशेष्यत्वावच्छिन्नप्रकारतानिरूपितजनकत्वनिष्ठ-विशेष्यत्वावच्छिन्नप्रकारतानिरूपितविशेष्यतावत्त्वसम्बन्धेन सङ्केतः, सङ्केतीय-तादृशविशेष्यतावत्त्वं वा द्वितीयसङ्केतानुसारिवाचकत्वम्। बोधनिष्ठ-विशेष्यतायामर्थवैशिष्ट्यं स्वनिष्ठविषयत्वसम्बन्धावच्छिन्नप्रकारतानिरूपितत्व-स्वावच्छिन्नविषयत्वसम्बन्धावच्छिन्नप्रकारतानिरूपितविशेष्यत्वावच्छिन्नत्व-स्वनिष्ठावच्छेदकतानिरूपितावच्छेदकतानिरूपितावच्छेदकताकसंसर्गतानिरूपित-प्रकारतानिरूपितविशेष्यत्वावच्छिन्नत्वैतदन्यतमसम्बन्धेन। बोधनिष्ठविशेष्यतायां गौरुक्तसम्बन्धेषु प्रथमसम्बन्धेन, गोत्वं द्वितीयसम्बन्धेन, समवायश्च तृतीयसम्बन्धेन विद्यत इति तत्तदर्थविशिष्टबोधनिष्ठविशेष्यत्वावच्छिन्न-प्रकारतानिरूपितजनकत्वनिष्ठविशेष्यत्वावच्छिन्नजनकत्वनिष्ठप्रकारतानिरूपित-विशेष्यतावत्त्वसम्बन्धेन द्वितीयसङ्केतस्य द्वितीयसङ्केतीयतादृशविशेष्यतावत्त्वस्य वा गोशब्दे सत्त्वेन गोशब्दस्य गोगोत्वसमवायवाचकत्वम्।

## तृतीयसङ्केतानुसारेण वाच्यत्वम्

शब्दजन्यत्वनिष्ठप्रकारतानिरूपितबोधत्वावच्छिन्नविशेषतावत्त्वसम्बन्धेन सङ्केतः, सङ्केतीयतादृशविशेष्यतावत्त्वं वा तृतीयसङ्केतानुसारिवाच्यत्वम्, विशेष्यवत्त्वं च स्वावच्छिन्नविशेष्यतानिरूपितविषयत्वसम्बन्धावच्छिन्न-प्रकारतावत्त्व-स्वावच्छिन्नविशेष्यत्वावच्छिन्नविशेष्यतानिरूपित-स्वावच्छिन्न-विषयत्वसम्बन्धावच्छिन्नप्रकारतावत्त्व-स्वावच्छिन्नविशेष्यत्वावच्छिन्नविशेष्यता-निरूपितप्रकारताकविषयत्वनिष्ठसंसर्गतानिरूपितावच्छेदकत्वनिष्ठावच्छेदकता-निरूपितावच्छेदकत्वनिष्ठावच्छेदकतानिरूपितावच्छेदकतावत्त्वैतदन्यतम-सम्बन्धेन।

'गोविषयकबोधो गोपदजन्यो भवतु' इत्याकारके तृतीयसङ्केते गोशब्दजन्यत्वविशेष्यभूते बोधे गौर्विषयतासम्बन्धेन प्रकारः, गोत्वं स्वावच्छिन्नविषयतासमवायनिष्ठावच्छेदकतानिरूपितस्वनिष्ठावच्छेदकताक-विषयतासम्बन्धेन प्रकारः। अत उक्तसङ्केतीयगोशब्दजन्यत्वनिष्ठप्रकारता-निरूपितबोधत्वावच्छिन्नविशेष्यतायाः स्वावच्छिन्नविशेष्यतानिरूपितविषयत्व-

सम्बन्धावच्छिन्नप्रकारतावत्त्वसम्बन्धेन गवि, स्वावच्छिन्नविशेष्यत्वावच्छिन्न-विशेष्यतानिरूपितस्वावच्छिन्नविषयत्वसम्बन्धावच्छिन्नप्रकारतावत्त्वसम्बन्धेन गोत्वे स्वावच्छिन्नविशेष्यत्वावच्छिन्नविशेष्यतानिरूपितप्रकारताकविषयत्वनिष्ठसंसर्गता-निरूपितावच्छेदकतानिष्ठावच्छेदकतानिरूपितावच्छेदकतानिष्ठावच्छेदकता-निरूपितावच्छेदकतावत्त्वसम्बन्धेन समवाये सत्त्वेन उक्तान्यतमसम्बन्धा-वच्छिन्नगोशब्दजन्यत्वनिष्ठप्रकारतानिरूपितबोधत्वावच्छिन्नविशेष्यतावत्त्व-सम्बन्धेन तृतीयसङ्केतवत्तया गोगोत्वसमवायानां गोशब्दवाच्यत्वम्।

## तृतीयसङ्केतानुसारेण वाचकत्वम्

अर्थविशिष्टबोधत्वावच्छिन्नविशेष्यतानिरूपितजन्यत्वनिष्ठप्रकारत्वा-वच्छिन्नविशेष्यतानिरूपितनिरूपितत्वसम्बन्धावच्छिन्नप्रकारतासम्बन्धेन सङ्केतः, सङ्केतीयतादृशप्रकारत्वं वा तृतीयसङ्केतानुसारिवाचकत्वम्। बोधत्वावच्छिन्न-विशेष्यतायामर्थवैशिष्ट्यं स्वनिष्ठविषयत्वसम्बन्धावच्छिन्नप्रकारतानिरूपित-विशेष्यतावच्छिन्नत्व-स्वनिष्ठस्वावच्छिन्नविषयत्वसम्बन्धावच्छिन्न-प्रकारतानिरूपितविशेष्यत्वावच्छिन्नविशेष्यत्वावच्छिन्नत्व-स्वनिष्ठावच्छेदकता-निरूपितावच्छेदकतानिष्ठावच्छेदकतानिरूपितावच्छेदकतानिष्ठावच्छेदकता-निरूपितविषयत्वनिष्ठसंसर्गताप्रकारतानिरूपितविशेष्यत्वावच्छिन्नविशेष्यत्वा-वच्छिन्नत्वैतदन्यतसम्बन्धेन।

उक्तसङ्केते शब्दजन्यत्वनिष्ठप्रकारतानिरूपितबोधत्वावच्छिन्नविशेष्यतायां प्रथमसम्बन्धेन गोवैशिष्ट्यस्य, द्वितीयसम्बन्धेन गोत्ववैशिष्ट्यस्य, तृतीयसम्बन्धेन समवायवैशिष्ट्यस्य च सत्त्वेन उक्तरीत्याऽर्थ-विशिष्टबोधत्वावच्छिन्नविशेष्यतानिरूपितजन्यत्वनिष्ठप्रकारत्वावच्छिन्न-विशेष्यतानिरूपितनिरूपितत्वसम्बन्धावच्छिन्नप्रकारतासम्बन्धेन तृतीयसङ्केतस्य गोपदे सत्त्वेन गोपदे गोगोत्वसमवायानां वाचकत्वमुपपद्यते।

## शाब्दबोधौपयिकं शब्दार्थसम्बन्धज्ञानम्

उक्तवाच्यवाचकत्वेषु वाच्यत्वज्ञानमेव शाब्दबोधौपयिकं न तु वाचकत्वज्ञानम्। तथा हि यदि वाचकत्वज्ञानस्य शाब्दबोधहेतुत्वं मन्येत,

तदा गोपदे गोवाचकत्वस्य, गोत्ववाचकत्वशरीरे समवायान्यसम्बन्धेनोल्लिख्यमानतया गोत्वस्य स्वरूपतः प्रकारत्वसम्भवेन गोत्ववाचकत्वस्य च ज्ञाने निर्बाधेऽपि समवायवाचकत्वशरीरे समवायस्य जात्यखण्डोपाधिभिन्नतया स्वरूपतः प्रकारत्वासम्भवेन समवायत्वानुपस्थितौ समवायवाचकत्वज्ञानस्य दुर्घटतया तद्दशायां गोपदात् समवायेन गोत्वप्रकारको बोधो नोपपद्यते। यदि च वाच्यत्वज्ञानस्य शाब्दबोधे हेतुत्वं मन्यते तदा गां विशेष्यविधया गोपदं च प्रकारविधया, वाच्यत्वं च संसर्गविधयाऽवगाहमाने तत्र संसर्गकुक्षौ गोत्वसमवाययोः स्वरूपतो भाने बाधकाभावेन न काचिदनुपपत्तिः।

### शाब्दौपयिकस्य वाच्यताज्ञानस्य स्वरूपम्

उक्ते त्रिविधेऽपि शाब्दबोधौपयिकं वाच्यताज्ञानं 'गौः गोपदवान्' इत्याकारकमेव, गोपदवत्ता च तत्तत्सङ्केतस्थले सम्बन्धभेदेन। तथा हि प्रथमसङ्केतविषयक उक्तज्ञाने गोपदवत्ता स्वजन्यबोधविषयत्वनिष्ठाश्रयत्वसम्बन्धावच्छिन्नप्रकारतानिरूपितसङ्केतीयविशेष्यता गवि गोपदस्य सम्बन्धः। अत्र च सम्बन्धे आश्रयत्वसम्बन्धावच्छिन्नप्रकारतायां गोत्वनिष्ठविशेष्यतानिरूपितसमवायसम्बन्धावच्छिन्नावच्छेदकतासम्बन्धावच्छिन्नप्रकारत्वावच्छिन्नत्वं विशेषणविधया प्रविष्टम्। अतोऽस्य ज्ञानस्य गोत्वसमवाययोरपि वाच्यत्वावगाहितयाऽस्माज्ज्ञानात् समवायेन गोत्वप्रकारकगोविशेष्यकशाब्दबोधोदये न काचिद् बाधा। द्वितीयसङ्केते गोपदवत्ता स्वनिष्ठविशेष्तानिरूपितजनकत्वनिष्ठप्रकारत्वावच्छिन्नविशेष्यतानिरूपितबोधनिष्ठप्रकारत्वावच्छिन्नविशेष्यतानिरूपितविषयत्वसम्बन्धावच्छिन्नसङ्केतीयप्रकारतासम्बन्धेन। अत्र च सम्बन्धे विषयत्वसम्बन्धावच्छिन्नगोनिष्ठप्रकारतानिरूपितबोधनिष्ठविशेष्यतायां समवायसम्बन्धावच्छिन्ननिष्ठावच्छेदकताकविषयत्वसम्बन्धावच्छिन्नगोत्वनिष्ठप्रकारतानिरूपितविशेष्यत्वावच्छिन्नत्वं विशेषणविधया प्रविष्टम्। अतोऽस्य ज्ञानस्यापि गोत्वसमवाययोर्वाच्यत्वावगाहितया नास्मादपि ज्ञानात् समवायेन गोत्वप्रकारकगोविशेष्यकशाब्दबोधोदये न काचिद् बाधा। तृतीयसङ्केते गोपदवत्ता च

स्वनिष्ठनिरूपितत्वसम्बन्धावच्छिन्नप्रकारतानिरूपितजन्यत्वनिष्ठविशेष्यत्वा-
वच्छिन्नस्वरूपसम्बन्धावच्छिन्नजन्यत्वनिष्ठप्रकारतानिरूपितबोधत्वावच्छिन्न-
विशेष्यत्वावच्छिन्नबोधनिष्ठविशेष्यतानिरूपितविषयत्वसम्बन्धावच्छिन्न-
प्रकारतासम्बन्धेन। अत्र च सम्बन्धे विषयत्वसम्बन्धावच्छिन्नगोनिष्ठ-
प्रकारतानिरूपितबोधत्वावच्छिन्नविशेष्यतायां स्वनिष्ठसमवायसम्बन्धावच्छिन्ना-
वच्छेदकताकविषयत्वसम्बन्धावच्छिन्नगोत्वनिष्ठप्रकारतानिरूपितविशेष्यत्वा-
वच्छिन्नत्वं विशेषणविधया प्रविष्टम्। अतोऽस्य ज्ञानस्यापि गोत्वसमवाययो-
र्वाच्यत्वावगाहितयाऽस्मादपि ज्ञानान्न समवायेन गोत्वप्रकारकगोविशेष्यक-
शाब्दबोधोदये काचिद् बाधेति प्रकृतविषयकविचारस्य दिक्सङ्केतः।

।। इति प्रथमः शक्तिखण्डः ।।



# अथ द्वितीयः खण्डः

## लक्षणानिरूपणम्

शक्तेरतिरिक्ताया लक्षणायाः स्वीकारे शाब्दबोधजनकपदार्थोपस्थितिं प्रति शक्तिज्ञानत्वेन लक्षणाज्ञानत्वेन हेतुतायां गौरवमालोच्य 'लक्षणा नातिरिक्ता शक्तिः' इति सिद्धान्तो महाभाष्यानुमोदितो भूषणसारकृदादीनाम्[1]।

परमलघुमञ्जूषायां श्रीनागेशभट्टोऽपि— "प्रसिद्धाप्रसिद्धाभेदेन शक्तेरेव द्वैविध्यमभ्युपेत्य लक्षणा अप्रसिद्धशक्तितो नान्या" इति सिद्धान्तितवान्[2]।

तत्र आपामरविद्वज्जनवेद्यात्वं प्रसिद्धात्वम्, यथा गङ्गापदस्य जलप्रवाहविशेषरूपेऽर्थे प्रसिद्धा शक्तिरियम्।

सहृदयमात्रवेद्यात्वमप्रसिद्धात्वम्, यथा 'गङ्गायां घोषः' इत्यत्र गङ्गापदस्य तीररूपेऽर्थे एषाऽप्रसिद्धा शक्तिः।

लघुमञ्जूषायामपि— "आरोपितशक्यतावच्छेदकरूपेण शक्त्यैव तत्पदवाच्यत्वेन प्रसिद्धान्यव्यक्तिबोधे व्यक्तिविशेषबोधे वा लक्षणा इति व्यवहारः" इत्युक्त्या परमतसिद्धा लक्षणा इति व्यवहार इति सूच्यते, स्वमते तु शक्तिरेव इत्यपि 'शक्त्यैव तत्पदवाच्यत्वे' इत्युक्त्या सूच्यते[3]।

### लक्षणालक्षणम्

एवञ्च शक्यतावच्छेदकारोप एव लक्षणा अत्र शास्त्रेऽभ्युपेया। यथा उक्तस्थले 'गङ्गायां घोषः' इत्यत्र गङ्गात्वस्य तीरे आरोपः। स च

१. वै. भू. सा., शक्तिनिरू.।

२. पर. ल. म., पृ. ८-९।

३. वै. सि. ल. म., लक्षणानि.।

गङ्गात्वाभाववत्तीरं गङ्गात्वेन जानीयामिति आहार्यरूपो ग्राह्यः, न तु भ्रमरूपः[१]। "पुंयोगादाख्यायाम्" इति सूत्रे भाष्यकृता ध्वनितश्चायं पन्थाः। तत्र हि— "गोपी इत्यादौ गोपस्येयमिति गोपसम्बन्धिस्त्रीत्वेन बोधे तस्येदमिति सूत्रेण तादृशेऽर्थेऽण्प्रत्यये सति 'गौपी' इति स्यात्। तादृशवाक्यस्यैव वा साधुत्वं स्यादिति 'गोपी' इत्यस्यासाधुत्वमाशङ्क्य नावश्यमयमेवाभिसम्बन्धो भवितुमर्हति, किन्तु तन्मूलकः सोऽयमित्यप्यभिसम्बन्धोऽस्ति। चतुर्भिः प्रकारैरतस्मिन् स इत्येतद् भवति तात्स्थ्यात्, ताद्धर्म्यात्, तत्सामीप्यात्, तत्साहचर्यात्। 'मञ्चा हसन्ति, सिंहो माणवकः, गङ्गायां घोषः, यष्टीः प्रवेशय' इत्युदाहरणानि" इत्युक्तम्[२]।

तत्रैव प्रदीपकृताऽपि— "आरोप्यते ताद्रूप्यम्, न तु मुख्यम्। बालेषु मञ्चत्वारोपान् मञ्चपदप्रवृत्तिर्हसन्तीति पदान्तरप्रयोगाद् विज्ञायते" इत्युक्तम्।

वाक्यपदीयेऽपि—

**गोत्वानुषङ्गो वाहीके निमित्तात् कैश्चिदिष्यते ।**
**अर्थमात्रं विपर्यस्तं शब्दः स्वार्थे व्यवस्थितः ।।** इत्युक्तमस्ति[३]।

लघुमञ्जूषायां चास्य श्लोकस्यायमभिप्रायः प्रकाशितोऽस्ति यत्— "कैश्चित् शब्दार्थसम्बन्धनित्यत्ववादिभिर्वैयाकरणैर्जात्यादेर्निमित्ताद् वाहीके गोत्वानुषङ्गो गोत्वसम्बन्ध इष्यते। अर्थमात्रमित्यत्र अर्थो विशेष्यभूतो ग्राह्यः। स्वार्थः प्रवृत्तिनिमित्तम्, तत्र शब्दो व्यवस्थित एवेति नोक्तसम्बन्धस्यानित्यत्वप्रसक्तिः" इति[४]। एवञ्च 'शक्यतावच्छेदकस्य प्रवृत्तिनिमित्तस्य गोत्वादेरारोपोऽपि शब्दार्थसम्बन्धतया अङ्गीकृत एवैतन्मतेऽपि'

१. वै. सि. ल. म., लक्षणानि.।
२. म. भा. ४।१।१८।
३. वा. प. २।२५७।
४. वै. सि. ल. म.; र. प्र. युता, पृ. १२३।

इत्यायातम्। प्रसिद्धस्य चार्थस्य यत्रार्थे कश्चन सम्बन्धोऽस्ति, तत्रैवायमारोप इत्यपि 'जाड्यादेर्निमित्तात्' इत्यनेनात्र ध्वनितम्। एवञ्च "स्ववृत्तिजाड्य-सदृशजाड्यवत्त्वं गोः सम्बन्धो वाहीके यदा ज्ञायते, तदैव गोत्वारोपः। गङ्गापदार्थस्य च सामीप्यसम्बन्धो यदा तीरे गृह्यते, तदैव गङ्गात्वारोप इति निरुक्तसम्बन्धज्ञानस्य फलभूतोऽयमारोपः" इत्यादि च बोध्यम्।

**आरोपात्मकलक्षणापक्षे कार्यकारणभावगतलाघवस्य स्फुटीकरणम्**

लक्षणावृत्तेरनतिरिक्तत्वे तदर्थविषयकशाब्दबोधे तदर्थनिरूपित-तत्पदनिष्ठशक्तिग्रहः, तदधीनतदर्थोपस्थितिश्च कारणमिति एकरूपेणैव कार्यकारणभावः कल्पनीयः स्यात्। तस्याः पृथक् सत्तावादिनां नैयायिकादीनां मते तु तदर्थविषयकशाब्दं प्रति तदर्थनिरूपिततत्पदनिष्ठलक्षणाग्रहस्य तदधीनतदर्थोपस्थितेश्चापि हेतुतायाः स्वीकारे गौरवं दृढं स्यादेव[१]। यत्तु—इदं पदमेतदर्थबोधकमिति शक्तिज्ञानेन कार्यकारणभावकल्पनेऽपि पदतदर्थ-भेदेनानेककार्यकारणभावकल्पनायां लक्षणानङ्गीकर्तृमतेऽपि गौरवं समानमेव।

अयं भावः — यथा भगीरथखातावच्छिन्नप्रवाहविषयकोपस्थितिं प्रति गङ्गापदं भगीरथखातावच्छिन्नप्रवाहविषयकबोधजनकमिति शक्तिज्ञानस्येव जाह्नवीपदं तादृशार्थबोधजनकमिति शक्तिज्ञानस्यापि कारणत्वमिति पदभेदेन कार्यकारणभावभेदः। एवं प्रवाहविषयकोपस्थितिं प्रति गङ्गापदं प्रवाहविषयक-बोधजनकमिति शक्तिज्ञानस्येव तीरविषयकोपस्थितिं प्रति गङ्गापदं तीरविषयकबोधजनकमिति शक्तिज्ञानस्यापि कारणत्वमिति अर्थभेदेन कार्यकारणभावभेदः।

एवं लक्षणावादिनयेऽपि प्रवाहविषयकोपस्थितिं प्रति गङ्गापदनिष्ठशक्तिज्ञानं कारणम्, तीरविषयकोपस्थितिं प्रति गङ्गापदनिष्ठलक्षणाज्ञानं कारणमिति कार्यकारणभावद्वयेन साम्यमेव। तत्तु न समीचीनम्, गङ्गापदस्य तीरे शक्तिभ्रमकाले ततस्तीरोपस्थित्यादेः सर्वसम्मततया लक्षणावादिनस्तवापि तत्तत्कारणतावच्छेदककोटौ तत्तत्पदतत्तदर्थनिवेशस्यावश्यकत्वात्। लक्षणाग्रह-

---

१. वै. भू. सा., शक्तिनि., पृ. ३२५।

प्रयुक्तकार्यकारणभावकल्पनागौरवं तु तव मतेऽतिरिच्यत एवेत्यादि बहु स्पष्टं भूषणसारे, दर्पणे रत्नप्रभायां च[1]।

### अत्र पक्षे बाधज्ञानस्य न प्रतिबन्धकत्वम्

ननु 'गङ्गायां घोषः' इत्यादौ आरोपितगङ्गात्वेन तीरस्य बोध इति तज्ज्ञानस्य भ्रमत्वेन तदुत्तरं गङ्गागतशैत्यपावनत्वप्रतीतिरूपं फलं न सिध्येत्। अत एव शुक्तौ रजतज्ञाने भ्रमत्वज्ञानवतः पुंसो न प्रवृत्तिरिति चेत्, उच्यते — मध्ये व्यञ्जनया तीरे मुख्यगङ्गापदार्थाभेदस्यापि प्रतीतिः। व्यञ्जनाजन्यज्ञाने बाधज्ञानस्य प्रतिबन्धकत्वं न जायते। यतो हि बाधनिश्चये प्रतिबन्धकत्वं हि तद्वत्ताबुद्धेरप्रमात्वबोधनरूपमेव। तच्चानाहार्यज्ञानस्यैव भवितुमर्हति, आहार्यं तु प्रमाभिन्नमेव। प्रकृते तु आहार्यमेव ज्ञानमिति पूर्वमेवोक्तमिति न तस्य प्रतिबध्यत्वम्, नापि प्रतिबन्धकत्वम्। शाब्दिकमते चैतत् प्रत्यक्षभिन्नमपि सिद्धान्तितमिति[2] प्रकृते तस्य शाब्दबोधात्मकत्वेऽपि न क्षतिः। अत एव 'स्थाली पचति' इत्यत्र पचिधातुवाच्ये स्थालीस्थे व्यापारे एकदेशभूतेऽपि अधिश्रयणाद्यधःश्रयणान्तव्यापारत्वारोपेण तद्विषयकबोधे नाप्रमात्वग्रहः। अन्यथा अनुपपत्तिपरिहारो न सम्भवेत्[3]।

### कतिपयस्थलेषु आरोपस्य प्रकारः

अत्र पक्षे कतिपयस्थलेषु आरोपस्य प्रकारः प्रदर्श्यते, तथा हि — 'गङ्गायां घोषः' इत्यत्र तु गङ्गात्वारोपः सामीप्यसम्बन्धमूलकः, अत एव विशेषस्त्वग्रे वक्ष्यते। 'काकेभ्यो दधि रक्ष्यताम्' इत्यत्र तु काकाकाकसमुदाये दध्युपघातकमात्रे काकत्वारोपः। तादृशसमुदायान्तःपातिनि काके यद्यपि काकत्वमस्त्येवेति कथमत्रारोपः, तथापि दध्युपघातकमात्रवृत्तिसमुदायत्वावच्छेदेन तत्समुदाये तस्याभाव एवेति तदभाववति तद्धर्मप्रकारिका बुद्धिरुदेतुमर्हत्येव[4]।

---

१. वै. भू. सा., र. प्र., पृ. ३२६-२७।
२. वै. सि. ल. म., कुञ्जिकाटीका, पृ. १३८।
३. वै. सि. ल. म., र. प्र. युता, पृ. ११३-१७।
४. वै. सि. ल. म., पृ. ११२।

"रविकिरणानुगृहीतानि भवन्ति कमलानि कमलानि" इत्यत्र तु सौरभातिशयविशिष्टकमलस्य कमलात्मकव्यक्तिविशेषस्य कमलत्वेन बोधः, तादृशे कमले कमलत्वस्य सत्त्वेऽपि सौरभातिशयावच्छेदेन तदभावान्नारोपानुपपत्तिः[१]। रत्नप्रभायां तु लक्षकपदस्य स्वशक्यतानवच्छेदकधर्मवन्निष्ठविशेष्यतानिरूपितस्वशक्यतावच्छेदकनिष्ठप्रकारताकप्रतीतिजनकत्वेन तादृशप्रतीतेरेवात्रारोपपदार्थत्वं सिद्धान्तितम्[२]।

तत्तु न मनोहरम्, उपर्युक्तेन लघुना प्रकारेणैव सर्वसम्मतेनेष्टसिद्धेः। तत्र सौरभविशेषरूपे विशेषणे कमलत्वाभाववति कमलत्वारोपे विशिष्टेऽपि तदारोपव्यवहारो भाक्तः। यथा संयुक्तसमवायसन्निकर्षस्य संयोगरूपविशेषणांश एव तज्जन्यत्वे सति तज्जन्यजनकत्वरूपं व्यापारत्वं संघटते, विशेष्ये तु तदारोप एव क्रियते। यथा च 'शिखी ध्वस्तः' इत्यादौ शिखानिष्ठस्य ध्वंसप्रतियोगित्वस्य विशिष्टे आरोपः, तद्वत्। किं वा "तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः, आकाशाद्वायुः, वायोरग्निः, अग्नेरापः, अद्भ्यः पृथिवी" इति श्रुतेरपि यथा न्यायनये आरोपमुद्रयैवोपपत्तिः। अत्र हि शब्दविशिष्टे आकाशे विशेषणीभूतशब्दांशगतोत्पत्तेर्विशिष्टे आकाशे आरोपः। अन्यथा तन्नये आकाशस्य नित्यत्वेन उत्पत्तेरुपपादनं न सम्भवति, तथा प्रकृतेऽपि निर्वाहः सुकरः। किञ्च— 'विशिष्टं शुद्धादतिरिच्यते' इति पक्षे नानुपपत्तिलेशोऽपि। उक्तं चाद्वैतसिद्धिकृता—"गुणो गुणिनो भिन्नोऽभिन्नश्च" इति[३]। शाब्दिकनयेऽत्र लक्षणास्थले सर्वत्र लक्ष्यतावच्छेदकीभूततत्तद्धर्मविशिष्ट एव धर्मिणि शक्यतावच्छेदकस्यारोप इत्यपि ज्ञातव्यम्।

### 'कचतस्त्रस्यति वदनम्' इत्यत्रारोपोपपत्तिः

अथ 'कचतस्त्रस्यति वदनम्' इत्यत्र राहुत्वविशिष्टे कचत्वारोपः, चन्द्रत्वविशिष्टे च वदनत्वारोप इति न त्रासान्वयानुपपत्तिः[४]। अत्र

१. वै. सि. ल. म., पृ ११२।
२. वै. सि. ल. म., र. प्र. टीका, पृ. ११३।
३. "गुणादिकं गुण्यादिना भिन्नाभिन्नं समानाधिकृतत्वात्"। (अ. सि., परि. १, पृ. ५९)
४. "अत्र सर्वत्र तत्तद्धर्मविशिष्टे शक्यतावच्छेदकधर्मारोपः"। (वै. सि. ल. म., लक्षणानिरू., पृ. १२२, र. प्र. टीका च)

प्रथमारोपेण त्रासप्रयोजकत्वमारोपितकचत्ववति राहौ, किञ्च 'कचतः' इत्यत्र तसर्थप्रयोजकत्वस्य स्वनिरूपितप्रयोज्यत्वसम्बन्धेन त्रासेऽन्वय उपपद्यते। अन्यथा कचपदार्थः केशस्तत्प्रयोज्यत्वस्य त्रासे बाधात् स नोपपद्येत। द्वितीयारोपेण त्रासकर्तृत्वस्यारोपितवदनत्ववति चन्द्रे, किं वा चन्द्रस्य तिबर्थे कर्तरि अभेदेन तादृशकर्तुश्च वृत्तित्वसम्बन्धेन त्रासेऽन्वय उपपद्यते। अन्यथा त्रासस्य चेतनधर्मतया वदनस्य तु चेतनत्वाभावेन स न स्यात्[१]।

## आरोपस्वरूपं तदुदाहरणं च

तदभाववति तत्प्रकारकं ज्ञानमारोपः, स द्विविधः — आहार्यो भ्रमश्च। तत्र बाधज्ञानसमकालिकेच्छाजन्यज्ञानमाहार्यारोपः[२], यथा रजतत्वाभाववतीं शुक्तिं रजतत्वेन जानीयामिति बाधज्ञानसमकालिकेच्छाजन्यम् इदं रजतमिति ज्ञानम्। भ्रमे तूत्तरकाले नेदं रजतम्, किं तर्हि इयं शुक्तिरिति बाधज्ञानं भवतीति विशेषः। स्वविरोधिधर्मधर्मितावच्छेदकस्वप्रकारकं ज्ञानमाहार्यमित्यपि तर्कशास्त्रे प्रसिद्धम्[३]। यथा उक्तस्थले स्वं रजतत्वं तद्विरोधी धर्मो रजतत्वाभावः, स धर्मिताऽवच्छेदको यत्र, एवं स्वं रजतत्वं प्रकारो यत्र तादृशं ज्ञानमियं शुक्ती रजतमिति ज्ञानम्, तदेव आहार्यम्। 'कचतस्त्रस्यति' इत्यत्र कचो राहुरित्याहार्याभेदबोधोऽनुयोगिमुखेन।

कचतस्त्रस्यतीत्यत्रापि कचत्वाभाववन्तं राहुं कचत्वेन जानीयामिति कचो राहुरिति ज्ञानमाहार्यारोपः। न तु कचत्वविशिष्टो राहुरिति ज्ञानम्[४]। कचत्वस्य तत्रोल्लेखे, कचत्वत्वेन तद्भानप्रसङ्गात्। कचो राहुरित्यभेदबोधस्य सिद्ध्य एव राहुत्वविशिष्टे कचत्वारोपकथनं सङ्गच्छते[५]। अभेदबोधश्चायमनुयोगिमुखेनेति राहोरभेदस्य कचेऽपि भानेन तत्र त्रासप्रयोजकता सङ्गच्छते।

---

१. वै. सि. ल. म., ल. नि.।
२. ल. श. शे., टिप्पण्याम्, संज्ञा-प्र., पू. सि. सूत्रम्।
३. सा. नि., गङ्गा-टीका, टिप्पणी-२ लक्षणे, पृ. ११८।
४. वै. सि. ल. म., कला-टीका, पृ. १५०।
५. वै. सि. ल. म., लक्षणानि.।

अभेदबोधश्च क्वचन प्रतियोगिमुखेन, यथा 'घटो द्रव्यम्' इत्यादौ प्रतियोगिनो घटादेरभेदो द्रव्ये बोध्यते। क्वचनानुयोगिमुखेनापि, यथा सौजन्यचन्द्रिकाचन्द्रो 'राजा' इत्यत्र सौजन्याभिन्नचन्द्रिकासम्बन्धी चन्द्रः, तदभिन्नो राजा इति बोधः सिद्धान्तितो रसगङ्गाधरकृद्भिः। तत्र शङ्कितम्— यदा सौजन्याभेदश्चन्द्रिकायाम्, तदा राजप्रतियोगिक एवाभेदश्चन्द्रे प्रतिपादयितुं युक्तः, न तु चन्द्रप्रतियोगिक इति। तत्रोत्तरितम्— अभेदश्च क्वचित्प्रतियोगिमुखेन क्वचिच्चानुयोगिमुखेन ग्रहणमिति न प्रकृते कश्चन दोष इति[१]। एवमेव 'वदनात् कुचमण्डलं बिभेति' इत्यादावपि आरोप उपपादनीयः। सर्वतोभावेनेदं फलति यदहो ! सौन्दर्यातिशयवतीयं कामिनी, अतो दर्शनीया इति। एतेन कचत्वारोपे कृतेऽपि न त्रासान्वयोपपत्तिः, कचत्वेन राहोर्बोधात्, न तु राहुत्वेनेति लघुमञ्जूषाग्रन्थोऽसङ्गत एवेति कथनमपास्तम्, राहुत्वेन ज्ञात एव कचत्वारोपात्।

किञ्च "कचत्वराहुत्वोभयधर्मप्रकारकोऽत्र बोधः" इति पण्डितराजोक्त्या स्फुटमायाति[२]। प्रयोजनानुसारमन्यतरधर्मप्रकारको बोध ईदृशस्थलेषु मन्तव्य इत्यपि केचित्[३]। नास्त्यत्र लक्षणा, व्यङ्ग्यं रूपकमलङ्कार इत्यपि बहव इत्यन्यत्। 'उभयधर्मप्रकारकबोधस्वीकारादेव शक्यादन्येन रूपेण ज्ञाते भवति लक्षणा' इति शिष्टोक्तिरपि सङ्गच्छते[४]। शक्यतावच्छेदकान्यरूपवत्त्वेन गृहीतेऽर्थे लक्षणा शक्यतावच्छेदकारोप इत्यर्थः। यथा तीरत्वविशिष्टस्य गङ्गात्वेन बोध इति हृदयम्।

**'गङ्गायां घोषः' इत्यत्र पुनः कश्चन विशेषः**

गङ्गादिना घोषस्य व्यवहितसामीप्ये तीरे गङ्गात्वारोपः कथितो भाष्यकृता[५]। अव्यवहितसामीप्ये तु गङ्गादौ तीरधर्माधारत्वारोपेण गौणेऽधिकरणे

१. रसगङ्गा., रूपकनिरू., पृ. ४८५।

२. रसगङ्गा., अतिशयोक्तिनिरूपणारम्भे।

३. तदेव।

४. वै. सि. ल. म., पृ. ११७।

५. म. भा. ४।१।४८।

सप्तमी, न तु तत्र लक्षणा। स्फुटं चैतत् "स्वरितेनाधिकारः" इत्यत्र भाष्ये[१]। तत्र हि—स्वरितेनाधिकं कार्यमित्युपक्रम्य गङ्गायां गाव इत्युदाहृतम्।

अयमाशयः — "आधारोऽधिकरणम्" इत्यत्राधारपदेन स्वरितत्व-युक्तेनाधिकं कार्यं करणीयमिति बोध्यते। तेन सर्वावयवव्याप्त्या आधारत्वाभावेऽपि 'गङ्गायां गावः, कूपे गर्गकुलम्' इत्यादिष्वपि अधिकरणे सप्तमी सिध्यति, अन्यथा 'तिलेषु तैलम्, दध्नि घृतम्' इत्यादावेव सा स्यात्, न त्वेषु गौणाधिकरणेष्विति। न्यायदर्शनकृता महर्षिणा गौतमेनाप्ययं प्रकारः सुष्ठु प्रदर्शितोऽस्ति[२]।

ननु व्यवहितस्थलेऽपि "इको यणचि" इत्यादाविव सामीप्येऽर्थे सप्तमीं स्वीकृत्य लक्षणाप्रयासो मुधैव वेति चेदुच्यते। तथा सति तीरे उत्कटशैत्यपावनत्वप्रतीतिर्न सिध्येत्। प्रयोजनवत्या अस्या लक्षणायाः स्वीकारे त्वेतन्मूलकव्यञ्जनया सा सिध्यति। न च शक्तिमूलकव्यञ्जनयैव तत् प्रतीयेतेति वाच्यम्, एवं सति तस्याः प्रतीतेर्नैयत्यं न स्यात्। घोषपदस्य शब्दार्थकत्वेऽपि गङ्गापदस्य गङ्गावच्छिन्ने नभसि लक्षणा विधातव्यैव, अन्यथा शब्दस्याकाशगुणतया गङ्गापदार्थे प्रवाहविशेषे तदधिकरणत्वस्य बाध एव स्यात्।

यत्तु वेदान्तनये पञ्चस्वपि महाभूतेषु पञ्चीकरणप्रक्रियया[३] चत्वारि स्वातिरिक्तभूतानि अष्टमांशरूपेण स्वस्मिन् वर्तन्त इति गङ्गापदार्थे प्रवाहविशेषेऽपि स्वातिरिक्तस्याकाशस्यापि सत्त्वेन तत्र न शब्दात्मकघोषाधि-करणत्वस्य बाध इति विभाव्यते। तत्तु न मनोहरम्, तत्र वस्तुत आकाशस्य सत्त्वेऽपि आकाशत्वेनोपस्थित्यभावेन शब्दस्यान्वययोग्यत्वाभावात्। अन्वयिताऽवच्छेदकरूपेणोपस्थित एव पदार्थे पदार्थान्तरस्यान्वय इति नियमात्[४]। अतस्तत्रापि आकाशत्वावच्छिन्नो लक्ष्य एव। ननु तावताऽपि

१. म. भा. १।३।११।

२. न्या. द., २।२।६३।

३. वे. प., सुबोधिनी., विषयपरि., पृ. ३५७-६०।

४. व्यु वा., प्र. कार., जया-टी., पृ. २४।

तत्ताकाशस्यारोपितगङ्गात्वेनैव बोधः, न त्वाकाशत्वेनेति कथमन्वयसङ्गतिरिति चेत्, न, "शक्यादन्येन रूपेण ज्ञाते भवति लक्षणा" इत्यनुपदमेव दत्तोत्तरत्वात्। एवं चाकाशत्वेन ज्ञाते आकाशत्वविशिष्टे गङ्गात्वारोपे सति गङ्गा आकाशमिति प्रतीत्या सर्वमुपपन्नमिति दिक्।

**अस्यारोपस्यानित्यत्वेऽपि शब्दार्थसम्बन्धस्य नित्यत्वमेव**

ननु शक्यतावच्छेदकारोपरूपलक्षणायाः स्वप्रकाराश्रयत्वसम्बन्धेनार्थे, स्वप्रकाराश्रयवाचकत्वसम्बन्धेन शब्दे सत्त्वेऽपि शब्दार्थयोः सम्बन्धरूपाया अस्या ज्ञानात्मकतया अनित्यत्वमेवेति "सिद्धे शब्दार्थसम्बन्धे" इति शाब्दिकसिद्धान्तो[१] व्याकुप्येतेति चेत्, उच्यते—

जाड्यस्थौल्यबहुभक्षकत्वादिनिमित्तभेदेन गोशब्दो वाहीकमभिधातुं प्रवृत्तः, तत्र विशेष्यभूत एवार्थः केवलविपर्यस्तः, गोत्वरूपे प्रवृत्तिनिमित्ते (स्वार्थे) तु गोशब्दस्तदानीमपि वर्तत एवेति कुतः शब्दार्थसम्बन्धस्य नित्यत्वं हीयेत? उक्तं च हरिणाऽपि—

**गोत्वानुषङ्गो वाहीके निमित्तात् कैश्चिदिष्यते ।**
**अर्थमात्रं विपर्यस्तं शब्दः स्वार्थे व्यवस्थितः[२]।।**इति।

एवञ्च विशेष्यांशे आरोपिततादात्म्यस्य सत्त्वेऽपि विशेषणांशे नित्यस्य तस्य सत्त्वेन तादृशसम्बन्धस्य नित्यत्वमक्षतमेव।

**शब्दानां गौणमुख्यत्वोपपत्तिः**

ननु सर्वेषां शब्दानां शक्त्याश्रयत्वेऽत्रार्थेऽयं शब्दो गौणः, अत्र चार्थे मुख्य इति विभागो न सम्भवतीति चेत्, न, प्रसिद्ध्यप्रसिद्धिभ्यामेव मुख्यत्वस्य गौणत्वस्य च व्यवस्थापनात्। तथा हि यस्मिन्नर्थे यः शब्दो लोकव्यवहारे प्रसिद्धः, तस्मिन्नर्थे स मुख्यः। यस्मिन्नर्थे यः शब्दो न

१. म. भा., नवा. १।१।१।
२. वा. प. २।२५७।

प्रसिद्धः, तस्मिन्नर्थे स गौण इत्युच्यते। यथा गोशब्दो गोत्वावच्छिन्ने सास्नादिमत्यर्थे प्रसिद्ध इति तत्र मुख्यः, वाहीकादौ अप्रसिद्ध इति तत्र गौण इत्युपचर्यते। उक्तं च हरिणा—

**सर्वशक्तेस्तु तस्यैव शब्दस्यानेकधर्मणः ।**
**प्रसिद्धिभेदाद् गौणत्वं मुख्यत्वं चोपचर्यते[1] ।।इति।**

"लक्ष्यमाणगुणैर्योगाद् वृत्तेरिष्टा तु गौणता" इति शिष्टोक्तिमुद्धरता श्रीनागेशभट्टेनापि वृत्तेर्गौणतां स्वीकुर्वाणेन शब्दानां गौणत्वं मुख्यत्वं चाङ्गीकृतमेव। तत्र "यद्गुणज्ञानपूर्वकं वाहीकादौ गोशब्दप्रयोगस्तैर्ज्ञायमानगुणैर्योगात् तद्गुणरूपात् सम्बन्धादित्यर्थः, प्रकृत्यादित्वादभेदे तृतीया" इति च व्याख्यातं तेनैव[2]।

तत्र लक्ष्यमाणेत्यस्य ज्ञायमानेत्यर्थकरणेन आरोपरूपलक्षणातो विरोधोऽपि परिहृतः, स्वमतं च पोषितम्। वृत्तेरत्र गौणत्वकथनेन तादृशवृत्तिमतः शब्दस्य गौणत्वं सुतरामायाति।

"गौणमुख्ययोर्मुख्ये कार्यसम्प्रत्ययः" इति परिभाषां सम्मानयतो भाष्यकृतोऽपि[3] अयं विभाग इष्ट एवेति सर्वमनवद्यम्।

**प्रकृतिप्रत्ययान्यतरमात्रप्रयोगे लक्षणाविमर्शः**

केवलयोः प्रकृतिप्रत्यययोः प्रयुज्यमानयोर्विशिष्टार्थे लक्षणा परमते स्वीक्रियते। यथा — 'गर्गाः' इत्यादौ गर्गापत्यरूपे प्रत्ययार्थविशिष्टेऽर्थे प्रकृतेः 'गर्ग' इत्यस्य शब्दस्य, 'इयान्' इत्यादौ प्रत्ययस्य च प्रकृत्यर्थविशिष्टेऽर्थे लक्षणा इति[4]। तदेतन्मतं शाब्दिकेभ्यो न रोचते, तत्र तत्रार्थे तादृशानां शब्दानां शक्तेरेव स्वीकारात्। उक्तं च हरिणा—

---

१. वा. प. २।२५५।
२. वै. सि. ल. म., लक्षणानिरू., पृ. १२०।
३. म. भा. ८।३।८२।
४. उद्धृतम्, वै. सि. ल. म., र. प्र. टीकातः, लक्षणानिरू., पृ. १२८।

**शास्त्रे क्वचित् प्रकृत्यर्थः प्रत्ययेनाभिधीयते ।**
**प्रकृतौ विनिवृत्तायां प्रत्ययार्थश्च धातुभिः[१] ।।इति।**

"नक्षत्रे च लुपि" इति सूत्रमपि अत्र मानम्[२]। "यः शिष्यते स लुप्यमानार्थाभिधायी" इति तत्र तत्र शिष्टोक्तमप्यत्र मानमस्त्येव[३]। एवं चैषु स्थलेषु उक्ता प्रसिद्धा शक्तिरेव, न त्वप्रसिद्धशक्तिरूपा लक्षणेति सिद्धान्तः। केचित्तु प्रत्ययलोपे सति प्रकृतेः प्रत्यये प्रत्ययार्थे लक्षणं लक्षणा इति रीत्या व्याख्याय "प्रत्ययलोपे प्रत्ययलक्षणम्" इति सूत्रं[४] लक्षणासमर्थकं प्रमिण्वन्ति, तत्तु भाष्याद्यननुगुणत्वान्न समादर्तुमिष्यते।

**आरोपात्मकलक्षणायां महर्षिगौतमसम्मतिः**

"सहचरणस्थानतादर्थ्यवृत्तमानधारणसामीप्ययोगसाधनाधिपत्येभ्यो ब्राह्मण-कट-राज-सक्तु-चन्दन-गङ्गा-शाटकान्न-पुरुषेष्वतद्भावेऽपि तदुपचारः" इति सूत्रं प्रणयता महर्षिगौतमेनेयमारोपरूपैव लक्षणाऽभ्युपगताऽस्ति। अत्र भाष्यम्— अतद्भावेऽपि तदुपचार इति अतच्छब्दस्य तेन शब्देनाभिधानमिति। सहचरणात् — 'यष्टिकां भोजय' इति यष्टिकासहचरितो ब्राह्मणोऽभिधीयत इति। स्थानात् — 'मञ्चाः क्रोशन्ति' इति मञ्चस्थाः पुरुषा अभिधीयन्ते। तादर्थ्यात् — 'कटार्थेषु वीरणेषु व्यूह्यमानेषु कटं करोति' इति भवति। वृत्तात् — 'यमो राजा, कुबेरो राजा' इति तद्वद् वर्तत इति। मानात्— 'आढकेन मिताः सक्तव आढकसक्तवः' इति। धारणात् — 'तुलायां धृतं चन्दनं तुलाचन्दनम्' इति। सामीप्यात् — 'गङ्गायां गावश्चरन्ति' इति देशोऽभिधीयते सन्निकृष्टः। योगात् — 'कृष्णेन रागेण युक्तः शाटकः कृष्णः' इत्यभिधीयते। साधनात् — 'अन्नं प्राणाः' इति। आधिपत्यात् — 'अयं पुरुषः कुलम्, अयं गोत्रम्' इति[५]।

---

१. वा. प. २।२३१।
२. पा. सू. २।३।४५।
३. प्रौ. म., अजन्तपु., सरूपसूत्रम्।
४. पा. सू. १।१।६२।
५. न्या. द., वात्स्या. भा. २।२।६४।

